२,३६[a]; -व्राजः आपध २,२१, ७; हिध २,५,११६.

परिव्राट्-कौशिक- पा, पाग २, ४,१४.

परि-व्राज[b]- -जेन आग्निगृ २,४,९ : १३.

परि-व्राजक- पाग ५,१,१३०; -कः बौगृ २, ९, १७; वाध १०, १; बौध २, ६, १४; १८; या १, १४; -कस्य बौपि ३, ११, १; -काः या २,८.

पारिव्राजक[c]- पा ५, १, १३०[d]; -कः कौसू ९२,१०.

परिव्राजक-कौशिक- पा,पाग २, ४,१४.

परिव्राजक-चारण-वानप्रस्थ-ब्रह्मचारिन्- -रिणाम् अप ७२,४,१.

परिव्राजक-वानप्रस्थ- -स्थौ शंध २५८.

**परि√शस्** (हिंसायाम्)>प(रि>)री-शास[e]- -सौ काश्रौ २६, २, १०; ५,१२; ७, १७.

**परि-शाल**[f,g]-(>पारिशाल्य-पावा.) पावाग ४,३,५८.

**परि√शिष्**, परिशिनष्टि काश्रौ ४, १४,११; बौश्रौ ५,१० : १६××; वैश्रौ; परि···शिनष्टि बौश्रौ १, १५ : ५; ४, ६ : २; १६××; बौगृ; परि···शिनष्टः बौश्रौ ५, ७ : २; परिशिंष्यात् बौश्रौ २५, ३२ : १३; २४;३०.

परिशिष्यते आश्रौ ९, ३, १३; शांश्रौ १५,२७,१; १६,२२,१८; बौध १,२,५७†; परि (शिष्यते) अअ १५, १२†; परिशिष्यन्ते वाधूश्रौ ३, ८६ : ३; ४, ४६ : ११; ९१ : ३; आपशु १८, ३; ५; ७; हिशु ६,८;९; १२.

परि-शिष्ट,ष्टा- -ष्टः शांश्रौ १८,२०, ५; -ष्टम् आश्रौ ३, ११, ८; भाश्रौ २, १६, १०; ७, १, ३; अप १९[2], ५, ९; -ष्टाः शांश्रौ १८,१०,२;६; वागृ १,१; -ष्टान् आश्रौ ७, २, १०; ५, ८; १०, २,३०; हिश्रौ ७,२,४३; -ष्टानि चव्यू २ : २९; ३२; -ष्टायाम् शांश्रौ १७,१७,५; -ष्टासु शांश्रौ १७,१४,४; १५,९; -ष्टे शांश्रौ १०, ८, १४; -ष्टेन बौश्रौ ३, १६ : ३; -ष्टौ शांश्रौ ९,५,८.

परिशिष्ट-संख्या- -ख्यानाम् वागृ १,१.

परि-शिष्य शांश्रौ ५, ९, २५××; हिश्रौ ५,४,७२.

परि-शेष- (>पारिशेष्य- पा.) पाग ५,१,१२४[g]; -षम् शांश्रौ १८, २४,२४; -षात् शांश्रौ १२, ७, १.

**परि√शी**, परिशेते बौश्रौ ९, ४ : २५; १७ : १३××; वैश्रौ; †परिशेरते आपश्रौ १, १४, ३; ८, १३, २०; बौश्रौ; परिशेरे[h] आपश्रौ १२, २५, ७†; बौश्रौ ७,१५ : ६××; वैश्रौ; परिशयीत बौश्रौ ६, २४ : १३; परिशयीरन् बौश्रौ २०, ६ : १९;२१ : २५××.

परिशाययन्ति बौश्रौ ९, २ : ३२; १२,८ : २६; वाश्रौ ३, १, १, २१; २, ३३; परि···शाययन्ति बौश्रौ १८, २२ : ३; परिशाययीत बौश्रौ २५, १६ : १०; परिशाययेत् आपश्रौ २१, १०, ३; बौश्रौ २०,४ : ३६; २३, २ : १९; हिश्रौ १६,४,१५.

परि-शायन- -नम् बौध १,६, ३८; -ने बौश्रौ २०, ६ : १९; २१, १३ : ३३.

**परि-शील**[f,g]-(>पारिशील्य-पावा.) पावाग ४,३,५८.

**परि√शुध्**>परि-शु(द्ध>)द्धा- -द्धा शंध २३४.

परि-शुद्धि- -द्ध्यै वैगृ ३,२ : २.

**परि√शुष्**, परिशोषयेत् आग्निगृ २,७, १० : ८.

**परि√श्रि**, परिश्रयति काश्रौ १७,१, ७; २१, ३, ३२; २६, ३, ९; आपश्रौ; परिश्रयेते हिश्रौ १६, ६, २४; परिश्रयत:[i] हिश्रौ ७, ५, २९; ७, २१; परिश्रयन्ति आपश्रौ १५, ५, २; २१, १७, १९; बौश्रौ ५, १३ : १५××; भाश्रौ; †परिश्रयस्व बौश्रौ ९, ७ : १७; १९ : २९; बौगृ ३,४, १९; परिश्रयेत् माश्रौ १,१,२, १३.

परि-श्रयण[j]- -णम् आपश्रौ ८,१४, २५; ११, १०, १४†; बौश्रौ; -णानि आपश्रौ ८,१५,१; १६, १६; बौश्रौ ८, २० : २७; १५, २२ : ११.

परिश्रयणी- -णीम् बौपि १, १४ : ४[k].

परिश्रयणा (ण-आ)वृत्- -वृता माश्रौ ४,२,४.

---

*a)* तु. आर्षव्याकरणम् । *b)* उप. भावे प्र. । *c)* विप. । तस्येदमीयः अण् प्र. । *d)* भाप. । *e)* = पात्र-विशेष- । करणे घञ् प्र. । *f)* अस. । *g)* तु. पागम. । *h)* प्रपु३ त-लोपे रूपम् । *i)* सप्र. °श्रयतः <> °श्रित्य इति पाभे. । *j)* भावाद्यर्थे कृत् । *k)* पाभे. पृ १५२६ h द्र. ।

परि-श्रयत्- -यन्तः माश्रौ २,१, १, ९; हिश्रौ ७,१,२५.
परि-श्रित्[a]- -श्रितः काश्रौ १६, ८, १७; २३; १८,६, १३; वैताश्रौ २९,११; शुअ २,१०९; -श्रित्सु काश्रौ १८, १, १; -श्रिद्भिः काश्रौ १७,१,७; २१,३,३२.
परिश्रित्-स्पृश्- -स्पृक् काश्रौ १८,५,६.
परि-श्रित- -तः बौश्रौ १५, १७ : २६; -तम् आपश्रौ ८,१६,१०; १०,५, १; ११, ९, ४; बौश्रौ; -तस्य आगृ २, ५, २; पागृ २, ६, ९; -ताः आपश्रौ १७, २१, ६; वैश्रौ १९, ६ : १४१; -तात् माश्रौ १,७,६,४८; -ताम् वैश्रौ १२,४ : ९; -ते शांश्रौ ३,१६, १६; आपश्रौ ३,९, ३; ८, १५, १८××; बौश्रौ; -तेन आपश्रौ १०,२४,२; हिश्रौ ७,२,३६.
परि-श्रित्य शांश्रौ १८, २४, १९; काश्रौ २५, २, २; आपश्रौ ८, १३,१५××; ११,८,४[b]; बौश्रौ.
परि-श्रीयमाण- -णयोः शांश्रौ ५, १३,७.
परि √श्रु> परि-श्रुत- -तम् माशि १५,१.
परिष[,षि[c]]क[d,e]- (> पारिष[,षि] क- पा.) पाग ४,१,११२[f].
?परिषयोयः वाधूश्रौ ४,७५ : २.
परि √ष (<स) द्, †परिषीदन्ति कौसू ५,४; अपं २ : ५६.
परि-षद्[g]- पाग ४,२,६०; ११०[h]; ३,११८[c,i]; ५,१,९७[e]; पावाग ३,३,१०८; -षत् बौध १,१,७; गौध २८,५०; -षत्सु आपध १, ११,३८; हिध १,३,८९; -षदः आपश्रौ ५, १९, ३; माश्रौ ५, १२, १२; वाश्रौ; -षदम् हिगृ १,१५,८; द्राग्र ३, १, २५; कौसू ३८,१७;३०; -षदि कौसू ३८, २२; वौध २, १, ३५; -षद्भ्यः बौगृ २,८,९†.
पारिषद- पा ४, २, ११०; ३,१२३; ५,१,९७.
पारिषदक- पा ४,३,११८.
पारिषदिक- पा ४,२,६०.
पारिषद्य- पा ४, ४, ४४; १०१.
परिषत्-त्व- -त्वम् बाध ३, ५; वौध १,१,१०.
परिषद्-गामिन्- -मि शंध ३००.
परिषद्-वल- पा ५,२,११२.
†परि-षद्य[j]- -०द्य आपश्रौ ५,१२, २; ६, ३, ४××; माश्रौ; -द्यः शांश्रौ ६,१२,७; आपश्रौ ११, १४, १०; बौश्रौ; -द्यम् या ३,२∮.
परि-षवण- परि √षू द्र.
परि-षस्वजाना- परि √ष्वज् द्र.
परि √ष(<स)ह् पा ८,३,७०.
परिषादक्[k]- (> पारिषादक- पा.) पाग ५,२,६१.
परि √षि(<सि)> परि-षय- पा ८,३,७०.
परि-षि[,षी]त[l]- पा ८, ३, ७०; -†तः आपमं २, २२, ५;६[?m]; भागृ २,२७ : १५; हिगृ १,१४, २[?n].
परि √षि(<सि)च्,ञ्च्, परिषिञ्चति काश्रौ ५,९,१२;१८, २, १××; आपश्रौ; परिषिञ्चन्ति काश्रौ १९,२, ८†; वौपि १, ८ : ११; शुप्रा ३, ६४†; परि(षिञ्चति) शुअ २,४२५†; †परिषिञ्चामि[o] शांश्रौ २,६, १०; ११; आपश्रौ; †परि...सिञ्चत, > ता काश्रौ १९, १, २२; आपश्रौ १९, ५, ११; माश्रौ; परि (षिञ्चत) ऋप्रा ७,३२; ११,५; उनिसू ७ : १४; परिषिञ्चेत् आपश्रौ १५,१४, ३; १६,३; बौश्रौ.
†परिषिच्यते आश्रौ ५, १२, १५; शांश्रौ.
परि-षिक्त- -क्ते माश्रौ ४,४, २५; २६; द्राश्रौ.
परि-षिच्य काश्रौ २६, ७, १२; आपश्रौ; परिषिच्यऽपरिषिच्य काश्रौ ५, ९, १३; बौश्रौ २२, ९ : १२.
परि-षिच्यमान- -ने बौश्रौ ९,१४: १०; १६ : १५××; माश्रौ.
परि-षिञ्चत्- -ञ्चन् शांश्रौ १, १५, ११; आपश्रौ; -ञ्चन्तम् आगृ १,२२,२१.
परि-षेक- -कः कप्र २, ४, १-५;

a) =(स्तम्भनार्थ-) पाषाण-खण्ड-। b) पामे. पृ १५२७ i द्र.। c) पाका. पाठः। d) व्यप.। व्यु.?। e) तु. पागम.। f) पार्षिका- इति [पक्षे] पागम., पार्षिका- इति भाण्डा. पासि.। g) =समिति-। अधिकरणे कृत्.। h) =ग्राम-विशेष-। i) पर्षद्- इति [पक्षे]. भाण्डा. प्रमृ.। j) वैप १ द्र.। k) अर्थः व्यु. च?। तु. पाका.। परि-सारक- इति भाण्डा. प्रमृ.। l) °षि° इति पा. पाठः। m) पामे. पृ १५२१ a द्र.। n) °दः इति पाठः? यनि. शोधः (तु. भागृ.)। o) पामे. वैप २, ३खं तैब्रा २,९,११,१ टि. द्र.

–कम् माश्रौ ३,५,५; बौगृ.

परि-षेचक– पाग २,२,९.

परि-षेचन– -नम् काश्रौ २६, ७, ३५; आपश्रौ १५, १६, ८; बौश्रौ; –नात् बौपि २, ११, २; भागृ २,२ : २; हिगृ १, ८, ३; –नाय वाश्रौ १,७,४,२४.

परिषेचना(न-आ)दि[a]– -दि माश्रौ ६,१४,१७.

परिषेचना(न-अ)न्त[a]– -न्तम् आपगृ ५,१३; ६,४××; भागृ.

परि√षिव्, षीव्[b], परिषीव्यति काश्रौ ८, ४, १४; भाश्रौ १०, ५, १३; हिश्रौ ७,१, ४४; ५, ३१; ७, २१; परिषीव्येत् बौश्रौ २१, १४ : ३०; ३१.

परि-षीवण– -णे बौश्रौ २१, १४ : ३०.

परिषीवण-ग्रन्थ्यभिमर्शन– -नानि काश्रौ ८,६,९.

परि√षू(<सू)[c], परिषौति आपश्रौ १,३, ६; भाश्रौ १,३, ९; वैश्रौ ३,४ : ३; हिश्रौ १,२,२६.

परिषुवति माश्रौ १,१, १, २९.

परि-षवण– -णात् आपश्रौ १,४,६; भाश्रौ १,३, २०; हिश्रौ १, २, ३९; –णे बौश्रौ २०,२ : २३.

परिषवणो(ण-उ)त्सर्जन–वर्जम् वैश्रौ ३,४ : ८.

परि-षूत[c]– -†तम् आपश्रौ १,३,६; बौश्रौ; –तस्य वैश्रौ ३,४ : ४; हिश्रौ १,२,२८; –तान् आपश्रौ १,३,१०.

परि-षूय आपश्रौ १,३, ८; वाश्रौ १, २,१,१५.

परि√षे(<से)व् पा ८,३,७०.

परि√ष्क,स्कन्द्[d]>परि-ष्कन्द– -न्दम् बौश्रौ १८,२४ : १८.

परि-स्कन्द– पा ८,३,७५.

परि-षू(<सु)√कृ[e], परिष्कृण्वन्ति ऋप्रा ४,८७†.

†परिष्-कृण्वत्– -ण्वन् ऋप्रा ४, ८५; उसू ६,३.

†परिष्-कृत,ता– -तः अप ३७,१४, २; –तम् ऋत ४, ५, ८; –ता अप्रा ३,४, १; –ताः शुप्रा ३, ५३.

परि*-ष्टि[c]– -ष्टिः आश्रौ २,१०,४†.

परि√ष्टु(<स्तु)[f], परिष्टुवन्ति बौश्रौ १८,१५ : ५; ७××; वाश्रौ २, २,३,१४.

परि-ष्टवन–>°नीय[g]– -याः शांश्रौ १७,७,६?[h].

†परि-ष्टुत– -तम् हिगृ १,१६,१७; –ते शांश्रौ ९,२५,१.

†परि-ष्टुति– -तिः बौश्रौ ६, २४ : २२; ९,२ : ३.

परि√ष्टु(<स्तु)भ्, परिष्टोभत ऋप्रा ५,१२†.

परि-ष्ठ(<स्थ)ल– पा ८,३,९६.

परि√ष्ठा(<स्था),परिष्ठात्, परिष्ठुः, परिष्ठाः ऋप्रा ५,१६†.

परि-तस्थिवस्–>°तस्थुषी– -षीः कौगृ ३,१५,५†[i].

परि-ष्ठा[j]– -ष्ठाः शुप्रा ४,२७†.

परि√ष्य(<स्य)न्द्[k]>परि-ष्यन्द[l]– -न्दे काश्रौ १८,३,९.

परि-ष्यन्दम् बौश्रौ १४,२६ : २२.

परि√ष्वज्, ञ्ज्[m], परिस्वजते हिगृ १, २४, ५; परिष्वजति बौगृ १, ७, ४२; परिष्वजन्ते ऋप्रा ५, १३†[n]; †परिष्वजाते[o] ॐया ६, २८; ११, ३४; परिष्वजस्व आपमं १, ११, ७†; परिष्वजध्वम् ऋप्रा ५,१३†; परिष्वजेत् वाध २०,१४.

†परिषस्वजे आश्रौ ७, २, १७; ऋप्रा ५,१५; †परिषस्वजाते या १४, ३०; ऋप्रा ५, १५; परिष्वङ्क्ष्यते या ६, २८; ११, ३४; पर्यषस्वजत् ऋप्रा ५,३०†.

†परि-षस्वजा(न>)ना– -ना या ९,१८ॐ; –नाः आपश्रौ १८, १५, ३; बौश्रौ १८, १८ : १२; हिश्रौ १३,६,३९.

परि-ष्वङ्ग[p]–>°ङ्ग-परम[a]– -मम् बौश्रौ ४, १ : २८.

परि-ष्वजत्– -जन्तः हिश्रौ १६, ५,३[q].

परि-ष्वजन– -नाय या २,२७.

परि-ष्वजमा(न)ना– -ना या ९, १८.

†परि-ष्वजे[c] आपमं १, १, ६; बौगृ १,६,२६; ४,१,११.

परि-ष्वज्य आपश्रौ २१, १२, ७[a]; आपध १, २५,२; हिध.

---

a) विप. । बस. । b) पा ८,३,७०;७१;११६ परामृष्टः द्र. । c) वैप १ द्र. । d) पा ८,३,७४ परामृष्टः द्र. । e) पा ६,१,१३७; १३८ परामृष्टः द्र. । f) पा ८,३,७०; ७१ परामृष्टः द्र. । g) तस्येदमीयश् छः प्र. उसं. (पा ४,२,२८)। h) °णी° इति पाठः ? यनि. शोधः । i) सपा. परितस्थुषीः<>परिसस्तुषीः इति पाभे.। j) वैप १,१९५० f द्र. । k) पा ८,३,७२ परामृष्टः द्र. । l) वैप २, ३खं. द्र. । m) पा ८,३, ६५;७० परामृष्टः द्र. । n) पाभे. वैप १, १९५० h द्र. । o) पाभे. वैप १,१९५० i द्र. । p) अर्थः ? = एक-हस्त- इति भाष्यम् । q) परस्परं पाभे. ।

³परिष्वति वाश्रौ३,२,६,२०.
परि-सं √यु (मिश्रणे) > परिसं-युत- -तः अप ७०,८,५.
परि-संवत्सर[a]- -रात् आपगृ १३, १९; मागृ १,९, २[b]; वागृ ११, २[b]; आपध २,८,७; १५, २०; हिध २, १,१०९;३,५४; –रान् गोगृ ४, १०,२५[b].
परि-सं √वह् > परिसम्-उह्य शांश्रौ २,६,९;४,३,७; काश्रौ; हिध १, १,१३५[c].
परिसम्-ऊढ- -ढस्य वागृ २, ४; –ढेषु बौगृ ३,१२,५.
परि-सं √स्था > परिसं-स्थि(त>) ता- -ता निसू ३,२ : २३.
परि-सं √ख्या > परिसं-ख्या[d]- -ख्या शांश्रौ ९,१,६; बृदे २,७१; मीसू १,२,४२; १०,७,४;७.
परिसंख्या(ख्या-अ)र्थ- -र्थम् मीसू ७, ३,२२; १०,५,३९.
परिसंख्या-होम- -मान् अप ३७,१०,१.
परिसं-ख्यात- -तः चव्यू २ : १०; –तम् चव्यू १ : १३; –ताः मैअ २१.
परिसं-ख्यातुम् शांश्रौ १,१७,८.
परिसं-ख्यान- -नम् कप्र १,४, १२; –नात् मीसू ३,७,३३.
परिसं-ख्याय कप्र २, ९, १०; वाध ३,४७.
परिसं-ख्येय- -यम् अप ७१,१८,२.
परि-सं √गृह् > परिसं-गृह्य अप २२, १,३.
परि-सं √चक्ष्, परिसंचक्षते गोगृ ३, ५,२.
परि √सद् > परि-सन्न- -न्नात् आश्रौ २,६,६[e].
परि-सम् √आप्, परिसमापयेत् अशां १२,५.
परिसम्-आपन- -नात् आपध २, १७,२४.
परिसम्-आप्ति- > °प्त्य(प्ति-अ)र्थ- -र्थः भासू ३,७.
परिसम्-आप्य आपश्रौ १४,२१,१२
परि-सम् √इ, परि···समीयात् वाश्रौ ३,२,१,१७; ६,५.
परि-सम् √ऊह् (प्रापणे), परिसमूहति भाश्रौ ६,८,११;१२; वाश्रौ १,५, २,१४; पागृ २, ४, २; बौगृ २, ५, ५८;६४; परिसमूहन्ति बौश्रौ १, १ : ६; भाश्रौ १, ६, १४; परिसमूहेत् वागृ ५,३१; गोगृ ४, ५, ५; जैगृ १, १ : १९; आपध १,४,१८.
परिसमूहयति कौसू ५७,२३.
परिसम्-ऊहन- -नम् भाश्रौ ६,१४, ९; गोगृ १,८, १६; कप्र १, ९, ५; २, ५, १८; ३, ८, २; –ने आश्रौ २,४,२१; –नेन आपश्रौ ६,३,१; हिश्रौ ३,७,११.
परिसमूहन-पर्युक्षण- -णे पागृ २,४,६.
परिसमूहना(न-आ)दि- -दीनि द्रागृ १,५,१६.
परिसम्-ऊह्य आश्रौ २, ५, १३; वाश्रौ १, २,२, ७; कौगृ; आपध १,४,१६[e].
परि-सं √मृज्, परिसंमार्ष्टि आग्निगृ २, ५,९ : ३.
परि-सर्पक-, °र्पम् परि √सृप् द्र.
परि-सहस्र[a]- -स्रम् शांश्रौ १७,७,२.
परि-सामन्[a]- -मभिः द्राश्रौ २,४,७; –मानि द्राश्रौ २, १, १; लाश्रौ १,५,१.
परि-सिन्धु[f]- (> पारिसैन्धव- पा.) पाग ४,२, १३३.
परि-सीर[g]- (> पारिसीर्य- पावा.) पावाग ४,३,५८.
परि √सृ, परि···सर ऋप्रा ५, ५८†; †पर्यसरत् आपमं २, १३, १२; आग्निगृ २,१, ३ : २०; भागृ १, २३ : ११; हिगृ २, ३,७.
†परि (ससृतुः) कौसू १४,७;१६, ४; अप ३२,१,१३; अअ ६,६७.
परिसारयति माश्रौ १,२,३,१४.
परि-सर्या- पाग ३,३,१०१.
परि-ससृवस्- > °ससुषी- -षीः शांगृ ३, १३,५[h].
परि-सारक[i]- -कम् या १४, २९.
पारिसारक[i]-
परि-सारिन्- पा ३,२,१४२.
परि-सृत्- -सृतः मागृ २,११,१२†[j].
परि-सृत्व(र>)री- -रीम् माश्रौ ५,२,१०,२३.
परि √सृज्, परि(सार्जि) ऋअ २,९, ९२†.
परि √सृप्, परिसर्पति कौसू २,१८.
परि-सर्पक- -काः अप ५२,५,३.
परि-सर्पम् काश्रौ १७,४, ७.
परि-स्कन्द- परि √ष्कन्द् द्र.
परि √स्तृ,स्तृ, परिस्तरेत् कप्र २,८,४
परिस्तृणुयात् गोगृ १,७,९.
परिस्तृणाति आपश्रौ १, १४, १४; १५, ३; ६,३, ५; बौश्रौ; परिस्तृणन्ति बौश्रौ २, १३ :

a) प्रास. । b) सप्र. °रात् <> °रान् <> पागृ १, ३, २ प्रतिसंवत्सरान् इति पाभे. । c) सप्र °मुह्य <> °मूह्य इति पाभे. । d) भाप., नाप. (विधि-विशेष-) । e) °शन्न- इति BI. । f) तु. पागम. । = प्रदेश-विशेष- । g) अस. । h) पाभे. पृ १५२९ i द्र. । i) परिषादक- टि. द्र. । j) पाभे. वैप १, १९५१ ८ द्र.

१७; ६, १ : १९××; परि···स्तृणन्ति वाधूश्रौ ३, ९ : १३; †परिस्तृणामि आपश्रौ ११, १३,७; बौश्रौ ६,२८ : ४२; वैश्रौ १४, ९ : ६; हिश्रौ ७, ६, ३१; कौसू २,२१; परिस्तृणीहि वैताश्रौ २, ७; कौसू २, २०†[a]; अअ ७, ९९†; शौच; †परिस्तृणीत आपश्रौ १, १४, १२; भाश्रौ १, ११, १; वैश्रौ; परिस्तृणीयात् बौश्रौ २०, ४ : ३९; ५ : ४; ६; २४,३४:६××; परि···स्तृणीयुः वाधूश्रौ ३,९ : १०;११; १३.

परि-स्तर[b]– -†रम् आपश्रौ १,५,५; भाश्रौ १, ५, १; हिश्रौ १, २, ३३; -रात् बौगृ १,४,३६.

परि-स्तरण– -णम् काश्रौ ४, १३, १५; आपश्रौ १,१४,१७; वाश्रौ; -णानाम् आपश्रौ १, ५, ५; भाश्रौ १, ५, १; -णानि वैश्रौ २०, २२ : ४; कागृ ४७, १५; -णाय बौगृ २, ११, ६३; -णे बौश्रौ २०,४ : ३८;५ : ३; वाश्रौ १,१, १, ७४; -णेभ्यः आग्निगृ १,६,३ : ९; -णैः आश्रौ १,८, २; वाश्रौ १,२,४,१२;५,२,४६.

परिस्तरणी– -णीम् आपश्रौ १,१४,१३.

परिस्तरण-कूर्च– -र्चम् वैध १, ६,४?[c] -र्चान् वैध २, १, ६.

पस्तिरणकूर्च-पवित्रा(त्र-आ)-दि– -दीनाम् वैश्रौ ११,१० : ७.

परिस्तरण-दाह– -हे आग्निगृ २, ७,९ : १९; बौगृ ४,२, २; भागृ ३,१९ : ५.

परिस्तरण-न्याय– -यः गोगृ १, ७,१४.

परिस्तरण-पात्रसंसादन-प्रोक्षणा-(णा-आ)ज्यनिर्वपण– -णानि काश्रौ ८,६,२३.

परिस्तरण-पात्रसंसादन-प्रोक्षणा-(णा-आ)ज्यनिर्वपणा(णा-अ)धिश्रयण– -णानि काश्रौ ६,२,५; ८,२,२०;८,३८.

परिस्तरण-पात्रसंसादन-प्रोक्षणा-(णा-आ)ज्यनिर्वपणा(णा-अ)धिश्रयण-स्रुक्संमार्जनो(न-उ)-द्वासना(न-अ)वेक्षण– -णानि काश्रौ ९, १,२.

परिस्तरण-बर्हिस्– -र्हिषः वैगृ १,८ : ४;२१ : ५.

परिस्तरण-योग– -गात् अप २४,४,१.

परिस्तरणा(ण-आ)दि– -दिः वैश्रौ ९,१ : ८.

परिस्तरणादि-संभार– -राणाम् वैगृ ६, १ : १७; -रे वैगृ ६,१ : ७.

परिस्तरणा(ण-अ)न्त[d]– -न्तम् वैश्रौ ११,१ : ५.

परिस्तरणीय– -यान् बौश्रौ ३, १० : २; आग्निगृ ३, ५, २ : १४;६, ३ : ४; बौपि.

परि-स्तीर्ण– -र्णस्य वागृ २, ४; -र्णाः बौश्रौ १,४:२; -र्णे वाश्रौ १,१,५,६.

परि-स्तीर्य आश्रौ २, ६, ४; शांश्रौ ४,३,७; काश्रौ.

परि-स्तीर्य[e]– -र्यम् वैगृ १,११ : ४.

परि-स्तीर्यमाण– -णान् भाश्रौ ४, ५,४; -णेषु आपश्रौ ४, ३, ६; वैश्रौ ३,९ : ९; हिश्रौ ६,१,३९.

परि-स्तृणत्– -णन् बौश्रौ ५, १२ : ११; २१, ४ : २६; -णन्तम् वैताश्रौ २,७.

परि-स्तृ(त>)ता– -ता वैश्रौ ११, २ : ५.

परि √स्पन्द् > परि-स्पन्द– -न्दः बौध ३,२,१६; ३,२३.

†परि √स्रंस् > परि-स्रस[b]– -स्रसा आपश्रौ ५,१,७; बौश्रौ २, ६ : १५; भाश्रौ ५,१,६.

†१परि-स्रज्– > °स्रजिन्[f]– -जी आपश्रौ २२, ७, ७; बौश्रौ १८, १ : ३; ४; हिश्रौ १७,३,६.

२परि-स्रज्[g]– -स्रक् आपश्रौ १२, १, ११; भाश्रौ २,३,१,१५; हिश्रौ ८,१,२२.

परि √स्रु, †परिस्रव शुसू ३, ११ : २०; अप ४८, ११[2]; निघ ३, २१; या ६,६; ९,२.

परिसुस्रुवुः वाधूश्रौ ४,७५ : ३९.

परि-(स्र>)स्रा[h]– > °स्रा-व(त>)ती[i]– -ती वाधूश्रौ ४,७५:४०.

परि-स्रुत्[i]– -स्रुत आपश्रौ १८, १, १०; १९, १, ८; ६,५; वैश्रौ ११, १ : १०; हिश्रौ २३, १, १४; -†स्रुतः काश्रौ १४, १, १४$; आपमं २, १५, ४[j]; आगृ २, ८, १६?[k]; शांगृ; कागृ ११, २[j]; भागृ २, ३ : ९[j]; मागृ १, २०,

*a*) पाभे. वैप १,१९५१ j द्र. । *b*) वैप २,३ खं. द्र. । *c*) °स्तरकू° इति पाठः? यनि. शोधः (तु. उत्तरं स्थलम्) । *d*) विप. । बस. । *e*) विप. । गस. उप. क्यप् प्र. उसं. (पा ३,१,१२३) । *f*) वैप १ द्र. । *g*) =पात्र-विशेष- । बस. उप. =रास्ना- (तु. भाष्यम्) । *h*) =२अप्- । गस. उप. कर्तरि डः प्र. उसं. (पा ३, २, १०१) । *i*) =अग्न्याहुतिविशेष- । *j*) पाभे. वैप १,१९५१ s द्र. । *k*) शोधः वैप १,१९५१ t द्र. ।

२; –†स्रुतस् शांश्रौ ४, ५, ३; १२, १७, १, आपश्रौ; –स्रुता वैश्रौ ११,१ : ११; माशि २०.

परिस्रुच्-छे(<शे)ष– -षम् काश्रौ १५,१०,१६.

परिस्रुत्-क्षीर-लिप्त– -प्तानि काश्रौ १९,५,११.

परिस्रुद्-धो(<हो)म– -मः काश्रौ १५,१०,१५.

**परि√स्वन्** > परि-स्वान[a]– -नम् निसू ८,४ : १७.

**परिस्वाना**[b]– -ना निसू ६, २ : ९; –नाम् निसू ६,२ : ८.

**परि√स्वृ** > परि-स्वार[c]– -रः लाश्रौ ७,८,८; नाशि १,७,५.

?**परिस्वृतेषु**[d] ऋप्रा ५,२४.

**परि√हन्**, परिघ्नन्ति शांश्रौ १६, १८,१४.

परिघातयति बौश्रौ १८,२० : ६,

परि[g]⌊,लि⌋-घ[f]– पा ३,३,८४; ८, २,२२; पावाग ८,२,१८[g]; –घः अप ४८,१०१†; ६१, १, २६; –घम् भागृ २, २८ : ३†; अप ६१, १, १४; ७०[2], २३, १३; –घे अप ६१,१,१५.

**परि-हनु**[h]–(>पारिहनव्य– पावा.) पावाग ४,३,५८.

**परि-हरण**– प्रमृ. परि√हृ द्र.

**परि-हव**– परि√ह्वे द्र.

**परि√हस्**, परिहस्यते अप ६८,४,४.

परि-हास– -सम् वाश्रौ ३, २, ४, १०.

**परि-हस्त**– पागवा ६,२,१८४.

**परि√हा**, (त्यागे) परिजहति बौश्रौ २५, ५ : ७; परिजह्यात् बौश्रौ २०,१ : ६३.

परिहीयते अप ५२,११,४.

परि-हाणि– पाउवृ ४,५१.

परि-हाप्य शांश्रौ १, १७, १०; ३, १६, १३××; काश्रौ; आपध २,१५,२[1].

परि-हाय माश्रौ ६,१,३,३.

परि-हीण– -णस्य बौश्रौ १४, २६ : ११; –णे बौश्रौ २३,८ : १९.

**परि-हार**– प्रमृ. परि√हृ द्र.

**परि√हि**, †परिहिणोमि[j] अप १,३८, २; अशां ८, २; †परिहिनोमि[j] ऋप्रा ५, ५०; अप्रा ३, १, ७; शौच ३,८८.

**परि√हु**, परिजुहुयात् बौश्रौ २०, १९ : १६; २१,१५ : ३९××.

**परि-हूत**– परि√ह्वे द्र.

**परि√हृ**, परिहरते काश्रौ १५,५,१३; परिहरति काश्रौ २,७,१; ३, ४, २५××; आपश्रौ; परिहरन्ते बौश्रौ १८, ३८ : १८; परिहरन्ति आश्रौ ४,१२, ८; आपश्रौ २१, ६, ६; बौश्रौ ३, २४ : १४; हिश्रौ १६, ३, ६; वैगृ ६५ : ६; परि···हरन्ति बौश्रौ १, १८ : १७; ५,४ : ३; ९ : २; परिहरत् सु १५,४; परिहरन्तै बौश्रौ १८, ३८ : १७†; †परिहर बौश्रौ १, १८ : १७; ४, ९ : ३६; ५, ४ : २; ९ : २; परिहरेत् आश्रौ २,३, ७; वैश्रौ; परिहरेयुः आपश्रौ ९,२०,९; वाश्रौ १, ४, ४, ३४; वाधूश्रौ ३, ८ ३ : ९; लाश्रौ ८,८,१६.

†परि···अहृषत कागृ ४५, ११; परिहार्षम् वैश्रौ १४,१९ : २†.

परिहारयेत् बौश्रौ २३, ३ : १४.

परि-जिहीर्षत्– -र्षन् निसू ८, ६ : ३०.

परि-जिहीर्षित– -तम् निसू २, ६ : १; गौपि २,७,१.

परि-हरण– -णात् शांश्रौ ८,१५,६; वाश्रौ ३, २, १, ४०; द्राश्रौ; –णाय वाश्रौ १,६,३, २०; –णे बौश्रौ २१, १५ : ४३.

परिहरण-काल– -ले बौश्रौ १५, २१ : ३; माश्रौ ५,२,१०,११.

परिहरण-प्राशन– -नम् आपश्रौ ३,१,५.

परि-हरत्– -रन् बौश्रौ २१, १५ : ४४; वैश्रौ १४,१९ : १; वैगृ ७, ४ : ३; गोगृ २,१०,३३; वैध ३, ६,१०; –रन्तः कौगृ ३,९,५८.

परि-हरमाण– -णः बौश्रौ २६,१८ : १९; १९ : ९; आपध; –णाः बौश्रौ १७,२७ : ५; २६, २५ : ९; २७ : २२.

परि-हरिष्यत्– -ष्यन् बौश्रौ ६,३३ : १; २०,१३ : ३२.

परि-हर्तव्य– -व्यम् या ३,२.

परि⌊,री[k]⌋-हार[l]– -रः शौच ४, ११७; –रम् विध ३,११; –रे जैश्रौका ८९; –रेण निसू ८,४ : ३४

परिहार-सू[m]– -सूः आपश्रौ १९,

---

a) =परि-स्वार-?। b) =ऋग्-विशेष-। <परि स्वानासः ⌊कौ १,४८५⌋। c) = गानप्रकारविशेष-। d) पाठः? सपा. शांब्रा ८, ८ परिश्रुतेषु इति पामे.। e) भागृ. अप. पाठः। f) =आयुध-विशेष-। g) तु. पागम.। h) अस.। i) सप्र. हिध २, ३, ३२ वर्जयित्वा इति पामे.। j) परस्परं पामे.। k) विघ. पाठः। l) भाप., पारिभाषिक- संज्ञा- (परि-ग्रह- ⌊शौच.⌋)। m) विप. >नाप. (पर्यारिणी- ⌊वैप १ द्र.⌋)। उस. उप. क्विप् प्र.।

१६,११; बौश्रौ २४,३८ : १२[a]; हिश्रौ २२,१,८[b].

**परि-हारम्** आपश्रौ १२, २५, १; बौश्रौ ७,१४ : ४३; माश्रौ.

**परि-हार्य–** -र्यः गौध ८,१२; शौच ४, ११६; १२६; –र्यम् बौश्रौ १८,२० : ५; –र्याः माशि ११, ४.

**परि-हृत,ता–** -तम् आपश्रौ ६,२८, ७; हिश्रौ २,८,३६; ३, ८, ६; –तासु आपश्रौ २२, ८, १६; काश्रौसं २९ : ६; बौश्रौ; –ते शांश्रौ १, १२, ९; वाश्रौ १, १, ५,१४.

**परि-हृत्य** आश्रौ ५,५,१२; ६,११; आपश्रौ.

**परि-ह्रियमाण,णा–** -णम् आपश्रौ ३,१९, ६; वैश्रौ ७,१ : १; –णाः वैताश्रौ १६, १; –णाय भाश्रौ ७,१०,४†; –णासु आपश्रौ १४, ९,३; द्राश्रौ १५,२,४; लाश्रौ ५, १०,३; –णे निसू ३,१२ : ४५.

**परि-होम[c]–** -मे बौश्रौ २०,१९ : १६; २१,१५ : ३९××.

**परि √ह्वल् > परि-ह्वालम्** काश्रौ ७, ५,६; भाश्रौ १०,७, १४.

**परि √ह्वे >** †**परि-ह्व[d]–** -वम् आपमं १,१३,५; बौगृ ४,२, ११; अप १,२६,४.

†**परि-हूत–** -तम् आपमं १,१३,६; बौगृ ४, २, ११; हिगृ १, १६, १७[e].

**परी(रि √इ)**, **पर्येति** शांश्रौ ४, १६, १०; १५, ११, १××; काश्रौ; आपश्रौ १६,२०,१४†[f]; हिश्रौ ११,६, ६१†[f]; या ९, १५†ф; **परीतः** काश्रौ ५,८,३३; वाधूश्रौ ४, २७ : १८; **परियन्ति** शांश्रौ १३,११,४; १७,१४,१३; १७, ८; काश्रौ; बौपि ३, २, ३; ४[g]; †**पर्येषि** आपश्रौ १२,१२,१३; हिश्रौ ८,३,४२ वैताश्रौ १४, १; †**पर्येमि** आश्रौ १०, ९, २; शांश्रौ १६,६,१; लाश्रौ ९,१०, १०; †**परियन्तु[h]** आपमं १,१,८; बौगृ १,६,२१; †**परीहि** आपश्रौ १२, २२, ८[i]; बौश्रौ ५, १३ : १७; १५ : १९; ७, १३ : २२[i]××; हिश्रौ ८, ७, १४[2i]; आपमं २, २, १०[j]; बौगृ २, ५, १४[j]; †**परीत[k]** आपश्रौ ३,४,४; भाश्रौ ३, ४,४; माश्रौ १, ३,३,१४[2]; वाश्रौ; †?**पर्याणि[l]** बौश्रौ २७, ६ : १६; १८; वैश्रौ २०, ३० : ११; १३; **पर्यैत्** शांश्रौ १५, ११-१२, १; १६,१५,१; बौश्रौ; **पर्यैताम्** वाधूश्रौ ४, ३० : ११; **पर्यायन्** वाधूश्रौ ४, १९ : ३५; **परीयात्** आपश्रौ ८, १८, ३; बौश्रौ; **परीयाताम्** बौश्रौ २०, १८ : २६; **परीयुः** वैश्रौ २१, ८ : ६; द्राश्रौ; लाश्रौ ४,३,१८?[m]; †**परीयाः** द्राश्रौ १०, २, १३; लाश्रौ ३, १०, १२; **परीयाम्** शांश्रौ १५, ११, १; १२, १; बौश्रौ १८, १९ : ११; १३××;

**परि-यत्–** -यन् वैश्रौ १०, ५ : २; द्राश्रौ १३,३,१; लाश्रौ ५,३,७.

**परी(रि-इ)त,ता–** -तम् निसू ९,२ : ९; –ताः निसू ६, ३ : १५; –तानाम् बौश्रौ १४, २७ : १३; १५××; –तायाम् शंध ३४८; –ते जैश्रौका ४३.

**परी(रि-इ)त्य** आश्रौ १, १२, ८; २, ४, १७; ६, १०, १३; शांश्रौ; अप १, ६, ६?[n]; या १२, १३; **परीत्यऽपरीत्य** आपश्रौ ८, १८, ६; भाश्रौ.

?**पर्यत्–** -र्यन् आश्रौ २,५,३[o].

**पर्य(रि-अ)यण–** -णम् कागृ ७१, १०; –णाय वाधूश्रौ ३,९१:५; –णे कागृ २५,३४[2].

**पर्या(रि-आ)य[p]–** पा ३, ३, ३८; –यः काश्रौ १०, १, ६; १२, ६,६; आपश्रौ; अप्राय ३, ३[q]; –यम् आपश्रौ १७, २०, १; हिश्रौ १२,६,१६; २२, १, ३१; द्राश्रौ; –यस्य माश्रौ २, ४, ४, ७; वैश्रौ; –याः आश्रौ ६, ४, ७; ११; काश्रौ १२, ६, ५; माश्रौ; अअ ८, १०; या १, ९[2]; †; –याणाम् आश्रौ ६,

*a*) अर्धसंवत्सरं सूत्वाऽपरस्मिन् प्रसूयते इति वा, एकस्मिन् पुमान् एकस्मिन् स्त्रीवत्सो वा यस्या इति वा भाष्यम्। *b*) °हासूः इति पाठः? यनि. शोधः (तु. आपश्रौ.)। *c*) परि-यज्ञ– टि. द्र.। *d*) वैप १ द्र.। *e*) °हुतं इति Böht (ZDMG ⌊५२, ८४⌋)?। *f*) पाभे. वैप १, १९५३ e द्र.। *g*) प्रतिपरि° इति R.। *h*) पाभे. वैप १,१९५३ g द्र.। *i*) पाभे. वैप १, १९५३ j द्र.। *j*) पाभे. वैप २,३खं. पर्येहि मंब्रा १,६,२८ टि. द्र.। *k*) पाभे. पृ ७८४ g द्र.। *l*) पाठः? परियाणि इति संस्कर्तुः टि. ⌊बौश्रौ.⌋ शोधः। *m*) परि° इति पाठः? यनि. शोधः ⌊तु. भाष्यम्⌋। *n*) °रि° इति पाठः? यनि. शोधः। *o*) पाठः? परि-यन् इति मूको.। *p*) भाप.> नाप.। *q*) उत्तरेण संधिरार्षः।

४,१; शांश्रौ; –यान् आश्रौ ६, ६,१; आपश्रौ; –याभ्याम् वाश्रौ १,६,१,२४; ३,२,५, ४; हिश्रौ १५, ६, ३२; कौसू ५८, २३; –ये आश्रौ ६, ४, २; आपश्रौ १२, १०, ११××; बौश्रौ; पा ३, ३, ३९; –येऽ-ये माग् १, १०,१९; –येण बौश्रौ १७,९ : १८; माश्रौ १,४,१,२७; ४, १, २८[a]××; वाश्रौ; विध ४३, २३; ४४,२; पा ७,३,३१; –येभ्यः द्राश्रौ ५, ३, ६; लाश्रौ २,७,५; –येषु आश्रौ ५, १०, ११; वैताश्रौ १९,१७; अपं १ : २९; –यैः शांश्रौ १३, १०, ४; ७; आपश्रौ; –यौ आपश्रौ १२, २९,२: २१,१३,१७, लाश्रौ.

पर्याय-कृति- -तिः निसू १, ८ : १४; २५; ३६; ९ : ५; –तौ लाश्रौ ६,६,९.

पर्याय-कृति-प्रयोग[b]- -गौ लाश्रौ ६,७,१९.

पर्याय-तस् (:) वैगृ १,२० : १०; जैश्रौका १५१.

पर्याय-प्रत्यवरोह- -हम् लाश्रौ ६,६,६.

पर्याय-प्रभृति- -तीनाम् आश्रौ ५,९,२.

पर्याय-भा(ग>)गा- -गा निसू १,८ : १७.

पर्याय-मन्त्र- -न्त्रान् अअ८,१०

पर्याय-रोह- -हम् लाश्रौ ६,६,५

°पर्याय-वचन- -नस्य पावा १, १,६८[2].

पर्याय-विद्रोष- -षम् निसू १, १० : २७.

पर्याय-विष्टाव[c]- -वान् द्राश्रौ ५,२,१६; लाश्रौ २,६,९.

पर्याय-शस् (:) आश्रौ १०,७,९.

पर्याय-समाधि- -धयः निसू ४, २ : १७.

पर्याय-सूक्त-मन्त्र- -न्त्रः अअ ११,३(२).

पर्याय-स्थान- -नेषु लाश्रौ ६, ६,१६.

पर्याया(य-आ)दि- -दिषु काश्रौ ९,५,४; १३,३,२५; द्राश्रौ ५, २, १७; लाश्रौ २, ६, १०; ६, १,१५; –दौ जैश्रौका १२०.

पर्यायादि-पर्यायान्त- -न्तयोः लाश्रौ ७,६,१८.

पर्याया(य-अ)न्त- -न्ते लाश्रौ १०, २, १२; –न्तेषु निसू ४, २ : १७.

पर्याया( य-अ )र्थ- -र्थम् पावा १,३,७.

पर्याया(य-अ)र्हर्णो(ण-उ)त्पत्ति- -त्तिषु पा ३,३,१११.

पर्यायिक[d]- -कम् अपं २ : १; –†केभ्यः अप ४६, ९, ७; अअ १९,२२.

पर्यायिक-वर्जम् अपं २ : ५.

पर्ये(रि-ए)ष्य( त् >)न्ती- -न्त्यः शांश्रौ १७,४,८.

परी(रि√ई)क्ष्,पर्यैक्षत वाधूश्रौ ४,२९ : १३; परीक्षेत आगृ १, ५, १†; २,८, १; वैगृ ३,१४ : ८; कौसू; या २,१.

परीक्षयेत् कागृ १४,३;४.

परी( रि-ई )क्षा- -क्षा बृदे ५,९४; –क्षायाम् कप्र ३,१०,१०.

परीक्षा(क्षा-अ)र्थ- -र्थः आपध १,२९,६; हिध १,७,६२.

परी (रि-ई )क्षि(त>)ता- -ताभिः शंध ४५९.

परी(रि-ई )क्ष्य वैगृ ५,१ : ३.

परी(रि-ई )क्ष्य,क्ष्या- -क्ष्यः अप ७०[3], १२, २; –क्ष्याः विध ८, ६; बृदे ३,८०; ५,१३.

?परीक्षन्त[e] वाधूश्रौ ४,५९[2] : ३.

परी(रि√इ)च्छ्, परीच्छेत् शांश्रौ १, १७,९.

परी(रि-इ)ज्या[f]- -ज्या बौश्रौ २५, २२ : ६; –ज्याम् हिश्रौ ९, ४, ७; –ज्यायाः काश्रौसं २९ : ८; –ज्यायाम् शांश्रौ ८, ४, ४; –ज्यायै बौश्रौ २१, २३ : १०.

परीण[g]- -णम् लाश्रौ १०, १९, १.

?परीणट-सहित[h]- -तम् वैश्रौ ४, ४ : २.

†परीणस्[d]- -णसः आश्रौ ८, १,२; वैताश्रौ ३१, २७; –णसम् तैप्रा ३,७; ७,४; –णसा निघ ३, १; –णसि क्षुसू ३,११ : ८[1].

परी-णह्- परि√णह् द्र.

परी-णाम- परि√णम् द्र.

परी-णाह- परि√णह् द्र.

परीत- परी(रि√इ) द्र.

परी-तान- परि √ तन् द्र.

?परीतोषात् परितोषात् द्र.

परी-त्त- परि√दा द्र.

परीत्य परी(रि√इ) द्र.

परी-दाय परि√दा द्र.

परी( रि √इ ) घ्,न्घ्, परीन्धे आपश्रौ १६, ९, ५; हिश्रौ १, ३, २४;

a) क्वचित् वा. क्रिवि. । b) षस.>द्वस. । c) समाहारे द्वस. । d) वैप १ द्र. । e) पाठः? पर्यैक्षन्त इति संस्कर्तुः शोधः । f) परियज्ञ टि. द्र. । g) अर्थः व्यु. च? । =कुरुक्षेत्रभूमेरुन्नतप्रदेश- इति भाष्यम् । h) पाठः? (तु. °णस° इति संस्कर्तुः टि.) । नू. =परीणाह्- । i) वैप १,१९५४ m,p द्र. ।

पर्यैन्द्व वाधूश्रौ ४, २९:१४; परि…ऐन्द्व वाधूश्रौ ४, २९: १५-१७; १८[२]; १९; परीन्धीत माश्रौ १,५,१,१८.

†परी(रि-इ)ध्य- -ध्यः आपश्रौ १४,२४,१; बौश्रौ २९, ६:३; वैश्रौ २१, १७:३; हिश्रौ १५, ८,४४.

परी(रि-इ)न्ध[a]- -न्धेन बौश्रौ २, १४:१; ५,१:२९.

परीप्सत्- प्रमृ. पर्या(रि √ आ)प् द्र.

परी-माण- परि√मा द्र.

परीर- पाउ ४,३०.

परी-वाद- परि√वद् द्र.

परी-वाप- परि√वप् द्र.

परी-वृत- परि√वृ (आच्छादने) द्र.

परी-शास- परि√शस् द्र.

परी(रि√इ)षु (गतौ)>परीष्टि-, पर्यें (रि-ए)षणा- पावा ३,३,१०७.

परी(रि-इ)ष्ट- परि√यज् द्र.

परीसान[b]- -नम् अप ४८,८०.

परी-हार- परि √हृ द्र.

?परुकणाः[c] भाश्रौ ५, १९,८.

परुच्छेप[d]- -पः ऋअ २, १, १२७; बृदे ३,५६ शुअ; या १०,४२ф; -पस्य चाअ ४१:२०; या १०, ४२; -पात् ऋअ ३, २१; बृदे ३, १२५; -पे बृदे २, १२९; ऋप्रा २,६५.

पारुच्छेप[e]- -पम् ऋअ २, १, १२७.

पारुच्छेपी- -पीः शांश्रौ १०, ७, २; बौश्रौ १६, ५:१८; २६, १४:४; वैताश्रौ ३१, २७; -पीनाम् आश्रौ ७, १२, १; -प्यः श्राश्रौ ८,१,११; १५.

पारुच्छेपि- -पिः ऋअ २, ९, १११; साअ १,४६३.

परुछेप-ऋच्- -ऋचः उसू ३,६.

परुत्[f] पा ५,३,२२; पाग १,४,५७[g]; पावा ५,३,२२.

परुत्-ल- पावा ४,३,२३.

परुत्[h]->°रुत्-क[i]- -कैः आपश्रौ ५,२७,११.

परुष[d]- पाउ ४,७५; -षः सु २३, ५; -षम् सु ९, २; आपध १, ३१, ५; -षाः अप ६३, ४, ९; बौध २,३,४०; -षे या २,६†ф.

परुषां(ष-अं)सक- (>पारुषांस-किन्-) पुरुषांसक- टि. द्र.

परुष्णी[d]- -०ष्णि या ९, २६†ф[j]; -ष्णीम् बृदे ६, ९६[२]; -ष्ण्याम् ऋप्रा ८,२५†.

परुस्[d]- पाउ २, ११७; -†रुः बौश्रौ ६, १४:१०; माश्रौ १, १, १, ३३; वाश्रौ १,२,१, १६; हिश्रौ १,२, ३२; -रुःऽ-रुः तैप्रा ८, ३२†; -रुषः आपश्रौ २३,१३, ३†; -रुषःऽ-रुषः शुप्रा ३, ३७†; -रुषा बौश्रौ ६, १४: १०†; -रुषि शुप्रा ३,३७†; -रुषिऽ-रुषि भाश्रौ ३, १५, ३; या १०, ४२; परुःषु कौसू १२४, ५†; -रूंषि आपश्रौ ५, १९,४†; बौश्रौ १८, ३२:१३; भाश्रौ.

परुषि-दित[k]- > °त-पूर्ण-घृत-विदग्ध[l]- -ग्धम् मीसू ३,४,११

परूष[m]- पाउभो २, ३,१६६.

परूष-क[n]- -कम् शांश्रौ १५,१९,१.

परे(रा√इ), परैति वाश्रौ १,६,६, २४; परायन्ति भाश्रौ ८, २०, ३; परैतु[o] शांश्रौ ४,१६, ५; कौगृ ५, ८,५; †परेहि आपश्रौ २१, ४, १; वैताश्रौ १०, १७; निसू; या ६, १२; ९, ३३; ११, ७; †परेत आपश्रौ १, १०, ७[p]; ५,१८, १; बौश्रौ ३,११ : २२[p]; ५,१५:१७[p]; भाश्रौ[p] १, ९,१२; ८,२०,४; हिश्रौ २, ७, ५१[p]; ३, ४, ५४; वैगृ ४,४: २४[p]; अप्रा ३, २,६; †परेतन[p] आश्रौ २, ७,९; माश्रौ १, १,२, १४;२७;७,६,५२; वाश्रौ १,२, ३,१४;३२;७,४,५३; †परा… एतन ऋप्रा २,७२;१०,३; ११, १०; उसू २,१८; परेयात् हिश्रौ ७,८,५४.

†परा(रा-अ)यण[d]- -०ण विध ९८, ९९; -णः अप्राय १,४†;-णान् विध १, ६४; -णे आपश्रौ १३, २०, १; बौश्रौ १०, २४: १८; वैश्रौ १८,१५:५; बौगृ ३,५,१८.

†परा-यत्- -यते आश्रौ १, १२, ३४; आपश्रौ; -यन् आपमं २, ११,२६.

---

a) नाप. (अग्नि-)। b) =उदर-। व्यु.?। c) पाठः? परुल्काः (परुष्मन्तः) इति शोधः (तु. सप्र. आपश्रौ ५,२७,११ परुल्कैः इति पाभे.)। d) वैप १ द्र.। e) =सूक्त-। f) =पूर्वसंवत्सर-। व्यु.? पाप्र. <पर- <पूर्व- इति। g) तु. पागम.। h) =परुस्- (तु. वैप १ पुरुच्छेप- टि.)। व्यु.?। i) विप.। मत्वर्थीयष् ठन्>कः प्र. (तु. भाष्यम्)। परुष्-क- इति C.। j) पाभे. वैप १,१९५५ l द्र.। k) उप. <√दा (अवखण्डने)। l) समाहारे द्वस.। m) =वृन्त-, तत्फल-। व्यु.?। n) स्वार्थे कः प्र.। o) पाभे. वैप १, १९५६ h द्र.। p) पाभे. वैप १,१९५६ m द्र.।

†परे(रा-इ)त- -ताः आपश्रौ १६, २५, २; वैश्रौ १८, १८ : ३; हिश्रौ ११,७, ४२; कौगृ ३, २, १; शांगृ ३,२,२; आग्निगृ ३,२, ५ : ४.

परे(रा-इ)त्य आपश्रौ ७, २७,१५; ९,२,४××; काठश्रौ.

परे(रा-ई)यिवस्[a]- -†वांसम्[b] आश्रौ २,१९, २२; शांश्रौ १५,९, ५××; कौसू; या १०,२०ф.

?परेयुवस्[c]- -वांसम्[b] वैश्रौ २०, २२ : १; आग्निगृ ३,५, २ : १; बौपि १, १ : १९; २ : १; हिपि १ : १८.

?परेक्कौति अप ४८,११६.

परे(रा√ई)क्ष्, परेक्षते आपश्रौ १२, ३०, १०; बौश्रौ ७, १० : १६; १८; वैश्रौ; परेक्षेते बौश्रौ ७, ११ : ६; परेक्षन्ते बौश्रौ ७,११ : १३; २०; परेक्षेत हिश्रौ ८, ५, ३८.

परेक्षयति बौश्रौ ४,४ : ३१.

परोक्ष-, °गव्यूति- प्रमृ. परस्- द्र.

परो(रा-उ)ष्णिह्[d]- -ष्णिक् शुअ २, १९९; ४, ८४; १०७; अअ ६, २३†; ७,५५××; पिं ३,२१; -ष्णिहः अअ २, ११; ६, २; -ष्णिहम् शुअ ४, २०; -ष्णिहौ अअ १८,१.

परोष्णिङ्-महापङ्क्ति- -ङ्क्ती शुअ २,३३९.

पर्गी- पर्णी- टि. द्र.

पर्चयत्- √पृच् द्र.

पर्जन्य[a]- पाउ ३,१०३; -न्यः काश्रौ २५, १२, ८†; †आपश्रौ ४, ६,१; १०, १, १४××; बौश्रौ; या २, २२; ४, २१; २७; ७, ८; १०; १०, १०ф; ११†; -न्यम् आपश्रौ ८, १, ४†; वाधूश्रौ ३, ५० : १†; पागृ २,१३,२; आग्निगृ; शंध ११६ : ५५[?e]; बृदे २, ३७; या ९, ६; -†न्यस्य आश्रौ १, ३, २३; बौश्रौ ६,१५ : १७; २७, १४ : ४; आपमं;-†न्याः बौश्रौ १८, १८ : १६; आग्निगृ २,५, १० : २८; ११ : २७; या ६, २२; ७, २३; -न्यात् अप्राय ६, २[२]; -न्यान् आग्निगृ २,५,११ : २८; -न्याय आश्रौ २, १५, २†; शांश्रौ ३,१३,४, आपश्रौ; -न्ये बौश्रौ १०, ४८ : २८†; -न्येन आग्निगृ २,५, १० : २७†; बृदे १, ११७; या ७, ५.

पार्जन्य[f]- -न्यः अप ४८,४४?; -न्यम् आपश्रौ ८, १, ३; बौश्रौ ५, १ : ८; भाश्रौ; -न्यस्य आपश्रौ ८,१, ४; वैश्रौ ८, ३ : ८; -न्याः शांश्रौ १६, ९, २९; आपश्रौ २०, २३, ११; -न्यान् काश्रौ २०, ८, ३०; -न्याय कौगृ ३, १०, ११†; -न्ये आपश्रौ ८, १, ४; बौश्रौ.

†पर्जन्य-जिन्वि(त>)ता[a]- -ताम् या ९,६ф.

पर्जन्य-पत्नी[a]- -°त्नि कौसू १०६, ७†.

पर्जन्य-प्री(त>)ता- -ताम् या ९,६.

पर्जन्य-मित्रा(त्र-आ)दि- बहु-देवता- >°त्य- -त्यम् अअ १,१.

†पर्जन्य-सृ(ष्ट>)ष्टा- -ष्टाः अप १,४०,३; अशां १०, ३.

पर्जन्य-स्तुति-संहृष्ट- -ष्टान् ऋअ २,७,१०३.

पर्जन्या(न्य-अ)ग्नि- -ग्नी बृदे ५, ३९.

पर्जन्याग्नि-देव(त>)ता[g]- -ता ऋअ २,१,१६४.

पर्जन्या(न्य-अ)ग्नि-विवस्वत्- -स्वताम् बृदे ४,३८.

†पर्जन्या(न्य-आ)त्मन्[a]- -त्मभ्यः बौश्रौ ७,४ : १५.

पर्जन्या(न्य-अ)निल-भास्कर- -राः बृदे ७,२८.

√पर्ण् पाधा. चुरा. उभ. हरितभावे.

१पर्ण[a]- पाउ ३,६; पाग ४, २, ९०; ३,७६; ५,२,९७;१००[h]; -र्णः आपश्रौ ५,२,४†; बौश्रौ २, ७ : १७; १२ : ४; १४, २९ : २०; वाधूश्रौ; -र्णम् शांश्रौ ४, १६, ५†; †आपश्रौ १, १४, ६××; बौश्रौ; -र्णस्य बौश्रौ १४, २९ : २०; वाधूश्रौ ३, ४१ : २९; ४, ६४[५] : ५; -र्णानि बौश्रौ १,३ : १; वैश्रौ ३,५ : ७; आपगृ २०, ५; कप्र ३, ४, ३; अप २०, ३, ३; -र्णे बौश्रौ ५, १६ : १०; जैगृ १, २ : १४†; अप ७०[२], ७,१५; ७१,११,२; वैध ३,५, १३; आज्यो १२, ४; -र्णेन बौश्रौ २४, ८ : १२; १३; २८, ८ : १४; भाश्रौ ९, ३, ५; बौगृ १, ७, ३४; अप्राय ४, १; ३;

a) वैप १ द्र.। b) पामे. वैप १,१९५७ g द्र.। c) °यि° > °यु° इति वावि. द्र.। d) =छन्दोविशेष-। कस.। e) पाठः? । अपु २१९, २४ स्वजन्यम् इति पामे.। f) विप.। साऽस्यदेवतीयार्थे अण् प्र.। g) विप.। बस.। h) तु. पागम.।

–र्णेषु आपगृ २०, १४; –र्णैः आपध २,२२,२; २३,२.

१पार्ण– पा ४, ३, ७६; –र्णः कौगृ २,६,९†; कप्र १,८, १२; –र्णान् गोगृ १,७,१५.

पार्ण-वैल्वा (ल्व-आ) श्वत्थ– –त्थाः गोगृ २,१०,१०.

पर्ण-कषाय– -यः वाधूश्रौ ४,१०४ : १५.

पर्णकषाय-पक्व– -क्वम् काश्रौ १६,३,१५.

पर्ण-कुटी– -टीम् शंध ३८७; विध ५०,१.

पर्ण-कूर्च[a]– -र्चः शंध ४१७.

पर्ण-कृच्छ्र[a]– -च्छ्रः शंध ४१७; विध ४६,२३.

पर्ण-त्व– -त्वम् बौश्रौ १४, २९: २०; वाधूश्रौ ३, ४१ : २९; ४, ६४[५] : ५.

पर्ण-त्सरु– -रुषु आग्निगृ ३, ७,३ : १५; बौपि २, १,७; –रूणाम् बौश्रौ १४, २९ : २१; २०, ३ : २४; आग्निगृ.

पर्ण-पुट– -टम् भागृ २, १० : २; हिगृ २,९,५; –टे आपगृ २०,७.

पर्ण-मणि[b]– -णिम् अअ ३,४.

पर्ण-मय– -यम् बौश्रौ १२,४ : २; १०××; आग्निगृ; –यान् बौश्रौ १४,१६ : १७[२]; –यानि काठश्रौ ७; १२०; कागृउ ४६ : ७; –ये बौश्रौ १७, ३६ : ५; १८, १ : १३××; –येन आपश्रौ १८, ९, १७; बौश्रौ १२, ४ : १३; ८ : ८××; वाश्रौ; –यैः हिश्रौ १४, ४,४१.

पर्णमयी– -यी आपश्रौ १, १५, १०; भाश्रौ १, १६, ५; –यीभ्याम् बौश्रौ १८, ९ : २; –य्याम् बौश्रौ १४, १६ : २३; १९ : २४; –य्यौ बौश्रौ १८, ८ : ६.

पर्णमय-वारण– -णौ बौपि १, १५ : ८२.

पर्णमय-वारण- वैतस-शमीमय– -यान् आग्निगृ ३, ८, १ : १०[c]; बौपि १,१४ : १०.

पर्णमय-स्रुव– -वम् बौपि ३, ६,६.

पर्ण-मुच्– पाउवृ २,२२.

पर्ण-मूल-फला(ल-अ)शन– -नः शंध ३८७.

पर्ण-रुह्– पाउवृ २, २२.

पर्ण-ल– पा ५,२,९७.

पर्ण-लोष्टा(ष्ट-अ)श्मन्– -श्मभिः गौध ९,१५.

१पर्ण-वल्क[b]– -ल्कः आपश्रौ १, १३, १५†; –ल्कम् आपश्रौ १, ११,१०; वैश्रौ ३, ८ : ७; हिश्रौ १, ३, १७; –ल्काः आपश्रौ १, १४,१; –ल्कैः हिश्रौ १,३,५३.

पर्ण-वल्कल[d]–> °ल-फा (एट>) ण्टा[e]– -ण्टाभिः माश्रौ ६, १, २,२.

पर्ण-विहार[f]– -रः भागृ २,९ : ८[g].

†पर्ण-शद[b]– -दः[h] आश्रौ ८, ३, २३; वैताश्रौ ३२,२५.

पर्ण-शाखा– -खया आपश्रौ ८, ९, १२; बौश्रौ १०, ९ : १८; २२, २ : २५; आग्निगृ; –खा बौपि १, १४ : १२; –खाः आग्निगृ ३, ५,२ : १५; ६,३ : ६; बौपि १, २ : १८; –खाम् काश्रौ ४, २, १; बौश्रौ १, १ : ७; १०, ९ : १५; २४, २३ : ३; माश्रौ १, १, १, १२; -खायाम् बौपि ३, ४, १६; –खासु बौश्रौ ११, ११ : ५; –खे आग्निगृ ३, ६, १:२६;३:३३;८,३:३९; बौपि.

पर्ण-शुष्– पाउवृ २,२२.

पर्ण-सद[i]– -दः[h] शांश्रौ १२,२३,३.

पर्ण-सेव[j]– -वान् बौश्रौ ५, ११ : ३; –वाभ्याम् बौश्रौ १४, १३ : २६; २९; –वेषु बौश्रौ ५,१५: ४; –वैः बौश्रौ ५,१५ : २४.

पर्ण-होम– -मः अप ७०[२],९,२.

पर्णा(र्ण-आ)शिन्– -शी विध ९५, १०.

पर्णिल– पा ५,२,१००.

पर्णीय– पा ४, २,९०.

२पर्ण[k]–>पर्णीय– पा ४,२,१४५.

३पर्ण[l]– (> २पार्ण– पा.) पाग ४, १,११२.

४पर्ण– (>पर्ण-स– पा. ) पाग ४,२, ८०.

पर्णक[l]– पाग २,४,६९.

पार्णकायन– -नाः बौश्रौप्र ४५ : ६.

२पर्णवल्क[l]– पाग ४, १,१०५.

पार्णवल्क– -ल्काः बौश्रौप्र ४५ : ६.

पार्णवल्क्य– पा ४,१,१०५.

*a*) =व्रत-विशेष- । *b*) वैप १ द्र. । *c*) °वारणवे° इति पाठः ? यनि. शोधः (तु. बौपि.)। *d*) द्वस. । *e*) विप. (२अप्-)। तृस. उप. =फाणित- ⌊कषायित-⌋। *f*) =कर्म-विशेष-। षस. पूप =पलाशपत्र- । *g*) सप्र. हिगृ २, ९, १ बौढयविहारः इति पाभे. । *h*) पाभे. वैप १, १९५९ l द्र. । *i*) = पर्ण-शद- *j*) षस. उप. = वृन्त- ( तु. संस्कर्ता )। *k*) भारद्वाजदेशवाचिनश् छ > ईयः प्र. । *l*) व्यप. । व्यु. ? ।

पर्णसि- पाउ ४,१०७.
पर्णाट[a,b]- पाग २,४,६३.
पर्णाढक[a]- पाग २,४,६३.
पर्णी- पाग ४,२,८२;४,५३[c].
पर्णुसि- पाउभो २,१,२४०.
पर्द- √पृ, पृ द्र.
√पर्द् पाधा. भ्वा. आत्म.कुत्सिते शब्दे.
√पर्प् पाधा. भ्वा. पर. गतौ.
पर्प[d]- पाउ ३,२८; पाग ४,४,१०[e].
पर्पिक- पा ४,४,१०.
पर्पट- पाउभो २,२,९८.
पर्परीरू- √पृ, पृ द्र.
पर्फरीक[f]- पाउभो २, २, २०; -का या १३.५†.
पर्य(रि-अ)ग्नि[f,g]- -ग्नये आश्रौ ३,२, ९; शांश्रौ ५, १६, ८†; काश्रौ ६, ५,१; आपश्रौ; -ग्नि[h] आश्रौ ६, १४, ११; काश्रौ २, ५, २२; आपश्रौ; माश्रौ १, २, ३, २६[i]; -ग्निम् माश्रौ १, ६, १, २; ७, ६, ८××; वाश्रौ; -ग्नौ आपश्रौ ७,१५, ४; १९,१७, ९; २०,१७,४; बौश्रौ.
पर्यग्नि √कृ> पर्यग्नि-करण- -णम् शांश्रौ ४,२०,४; बौश्रौ २४,९ : ९; १० : १७; माश्रौ; -णात् आपश्रौ १९,८,२; बौश्रौ ५,५ : १७××; माश्रौ; -णे बौश्रौ १५, २८ : १५; २०,२८ : ६.
पर्यग्निकरण-पर्याय- -ये आपश्रौ १९, ८, ३; हिश्रौ २३, १,३.
पर्यग्निकरणा(ण-अ)न्त[j]- -न्तम् शांश्रौ १५,१, २३; वाश्रौ ३,२,६,६२; ७,८.
पर्यग्नि-कृत, ता- -तः अप्राय ३, २; -तम् शांश्रौ ४, १७, १०; ९, २७, ५; काश्रौ; -तस्य वाधूश्रौ ३, ४४ : १७; वैताश्रौ २४,१२; -तान् काश्रौ २०, ६, ९; २३,४,७; आपश्रौ; -तानाम् आपश्रौ १८, २, १४; बौश्रौ; -ताम् भाग २, १६ : ७; -ताय शांश्रौ १५, २१,१; -तेषु शांश्रौ १५, १५, ५; -तैः बौश्रौ ११, ४ : १२; १५, २८ : १९; १७, १४ : १५.
पर्यग्नि-कृत्य वैश्रौ १७,१० : ७.
पर्यग्नि-स्तोक-मनोतो(ता-उ) त्री यमान-सूक्त[k]- -क्तानि आश्रौ ३,१,२२.
पर्यग्न्या(ग्नि-आ)घावसुति[l]- -ती वैगृ ३,१६ : १४.
पर्यङ्क[l]- पा ८,२, २२; पावाग ८, २, १८[m]; -ङ्कम् अप ४,१,१४.
पर्य(रि √अ)ङ्ख्, पर्यङ्खयाते[n] आग्निगृ ३, ५, ७ : २५; बौपि १,७ : २.
पर्य(रि-अ)ङ्ग- >°ङ्ग्य[o]- -ङ्ग्याः वाश्रौ ३, ४, ३, १३; शुअ ३, ४१; -ङ्ग्याणाम् काश्रौ २०, ७,४; बौश्रौ १५,३० : २६;३१ : १५××; -ङ्ग्यान् शांश्रौ १६,३, २८; काश्रौ २०,६, ४; आपश्रौ; -ङ्ग्येषु बौश्रौ २६,११ : ६.
पर्य(रि √अ)ज्,ञ्ज्, पर्यणक्ति आपश्रौ ७,२,३; माश्रौ ७,१,११; हिश्रौ ४, १, २०; पर्यनक्ति माश्रौ १, ८,१,५; वाश्रौ १,६,१,८.
पर्य(रि-अ)ज्य वैश्रौ १०,१ : १६.
पर्य(रि-अ)ञ्जन- -नेन वाश्रौ ३, २,१,१७; २,६,५.
पर्य(रि √अ)ट्, पर्यटेत् गौध ९, ३६; पर्यटेयुः जैगृ २,७ : ४.
पर्यत्- परी(रि √इ) द्र.
पर्य(रि-अ)न्त- -न्तान् वैश्रौ १०, ४ : १३[p].
पर्यन्ती(य>)या[q]- -याः आपश्रौ ११,१०,६[r].
पर्य(न्त्य>)न्त्या[s]- -न्त्याः हिश्रौ ७,५,२०;७,१३[r].
पर्य(रि-अ)पे(प √इ)> पर्यपे(प-इ)त- -ते आग्निगृ १, १, ३ : ५०; ४ : ४३;६, ३ : ५८.
पर्ययण- परी(रि √इ) द्र.
पर्य(रि √अ)र्ष्, †परि(अर्ष)ऋअ २,९, ५२;साअ१,४९६;†परि(अर्षत)[t] कौसू ४६, ८; अअ ६,२८.
पर्य(रि-अ)व √चि > पर्यव-चयन- -ने वाधूश्रौ ३,१०० : ८.
पर्य(रि-अ)व √दा (< दो[अव-खण्डने]), पर्यवद्यति आपश्रौ १९, २२,११; बौश्रौ १३, २९:१०.

a) व्यप. । व्यु.?। b) <१पर्ण- + √अट् इति पागम.। c) पर्णी- इति [पक्षे] भाण्डा. पासि. च। d) नाप.। व्यु.?। e) =दारुमयशकटप्रायोपकरण- इति पागम.। f) वैप १ द्र.। g) प्रास. (वैतु. विद्याधरः [काश्रौ ६,५,१] बस. इति)। h) द्वि१ सत् वा. क्रिवि.। i) °ग्निम् इति पाठः? यनि. शोधः। j) विप.। बस.। k) द्वस.>कस.। l) द्वस.। m) तु. पागम.। n) =सपा. तैआ ६,१,४। ऋ १०,१६,७ तु पर्यङ्खयाते इति, शौ १८,२,५८ परीङ्खयातै इति च पामे.। o) वैप २,३खं द्र.। p) सप्र. आपश्रौ ७,४,५ अन्तान् इति पामे.। q) विप.। तत्रभवीयस् छः प्र. उसं. (पा ४,४,११७)। r) सप्र. °न्तीयाः<>°न्त्याः इति पामे.। s) विप.। भवार्थे वा अर्हार्थे वा यत् प्र.। t) वैप १,१९६० r द्र.।

**पर्य( रि-अ )व √धा**, पर्यवदध्यात् आपध १,३,४०; १०,३०; हिध १,१,११६;३,५७.

**पर्य(रि-अ )व √लुप्** > पर्यव-लोपम् बौश्रौ ६,२० : ४.

**पर्य(रि-अ )व √शिष्**, पर्यवशिष्येत् वैताश्रौ ११,५.

**पर्य(रि-अ)व √सो**, पर्यवस्यति वाधूश्रौ ३,६९ : १९; पर्यवस्यन्ति बौश्रौ १२,५ : १;१५,१३ : १३.

पर्यव-सान- -नात् गोगृ १,६,१६.

पर्यव-सित- -तम् आग्निगृ २, ४, ६ : १.

**पर्य(रि-अ)व √स्था** > पर्यव-स्थातृ[a]- -तरि पा ५,२,८९.

पर्यव-स्थित- -तः अप ७१, १, १; -ताः वाध २५, १०.

**पर्य( रि-अ) वे( व √इ )**, पर्यवेयात् आपश्रौ ८,२१,४.

पर्यवैष्यत् निसू ४,८ : २८;३०; ३२.

पर्यवे(व-इ)त,ता- -तायाम् बौश्रौ २६, २७ : २४; –ते आपश्रौ १५, २१,२; बौश्रौ ९, २०, ३; १८, ११ : ५××; बौगृ; –तेषु बौश्रौ १२,३ : ४; ९××.

पर्यवेत-रात्रि[b]- -त्रयः बौश्रौ १८, ४४ : १९.

पर्यवेत-व्रत[b]- -तः कौसू ४२, १३.

पर्यवेतव्रत-दीक्षिष्यमाण- -णानाम् कौसू ५५,६.

**पर्य(रि अ)वे (व √ई) क्ष्**, पर्यवेक्षेत जैश्रौ १९ : ६.

**पर्य (रि √अ ) श् (व्याप्तौ )**, †परि··· अश्नोतु आपश्रौ ६, १७, १२; हिश्रौ ६,६,१६; †परि (अश्नोतु) शांश्रौ २,१२, ७; काश्रौ ४,१२, ३; शुअ १,१९८; चाअ ७ : ४.

**पर्य(रि √अ) श् (भोजने)** > पर्य(रि-अ)श्नत- -श्नतः शंध १३३.

**पर्य(रि √अ)स् (भुवि)**, परिष्टः ऋप्रा ५, १२†; परिषन्ति ऋप्रा ५, १६†.

**पर्य(रि √अ)स् क्षेपणे)**, परि···अस्यते अप्रा १, १, १५†; पर्यस्यति बौश्रौ ६,५ : ७; ७, ४ : ८××; माश्रौ; पर्यस्यन्ति शांश्रौ १८, २४, २३; काश्रौसं २६ : ५; बौश्रौ ४, ६ : ५५; पर्यस्यत् बौश्रौ २५, १७ : ७.

पर्य(रि-अ)सन- -ने पावा ३,१,२०.

पर्य(रि-अ)स्त, स्ता- -स्तः वाधूश्रौ २,१३ : ३; ४,१०६ : २; –स्तम् शांश्रौ १,३,५; वाश्रौ ३,१, २, १४; –स्ताः माश्रौ ४, ७, ३; –स्ताम् वाश्रौ ३,४,१,१४; –स्ते बौश्रौ १४,१२ : ३.

पर्यस्ता(स्त-अ)क्ष[c]- -क्षाः अअ ८,६†.

पर्य( रि-अ) स्य शांश्रौ २, ९, १४; काश्रौ २५, ८.१२; काठश्रौ.

पर्या ( रि-आ ) स[d]- -सः आश्रौ ६, ४, १०; शांश्रौ १२, ४-५, ३; १०, ५××; द्राश्रौ; –सम् शांश्रौ १२, २, ९; ११, १७; माश्रौ; –सस्य शांश्रौ १२, ३, २१;४,२१;५,२२; –साः आश्रौ ६,४,९; ७,२,१२;५,१४; शांश्रौ १२,२, ३; ३, २; –सात् शांश्रौ १२,१२,४; २६,४; मीसू ५,३, ७; –सान् आश्रौ ७, १, १५; शांश्रौ १२, ६, १९, –सानाम् शांश्रौ ११,३,२; १२,८,४; १४, ३,११; –सैः शांश्रौ १२,२,२७.

पर्यास-वर्जम् आश्रौ ६,४,१२.

पर्यास-स्थान- -नेषु आश्रौ ७, ५,१४.

पर्यासा(स–आ)द्य-तृच—वर्जम् वैताश्रौ ३९,३.

**?पर्याकारम्**[e] आश्रौ ८,३,१७†.

**?पर्याक्काजनीनाम्** वाश्रौ ३, १, २, ४४.

**पर्या(रि-आ) √ख्या** > पर्याख्यान- -ने पावा २,४,५४.

**पर्या(रि-आ) √गम्**>पर्या-गत- -ते आपश्रौ ५, २२, १२; २४, ८; बौश्रौ.

पर्या-गतवत्- -वन्तम् या १०, २०.

**?पर्यागारम्**[e] शांश्रौ १२,१८,१८†.

**पर्या(रि-आ) √चि ( चयने )** >पर्या-चित- पाग ६,२, १४६.

**?पर्याज्य**[f]- -ज्यम् बौश्रौ २१, १३ : २६.

**पर्याण-यजुस्**[g]- -जुः बौश्रौ २१,१० : १०.

**पर्या( रि-आ ) √ण, नह्**, पर्याणह्यति माश्रौ २,१,४,२३; पर्यानह्यति आपश्रौ १०, ३१, ५; भाश्रौ १०, १९, ५; वैश्रौ १२, २२ : ४; हिश्रौ ७, ३,४; तैप्रा ७,१६†.

†पर्या-णद्ध- -द्धम् आपमं १, ७, १०; कागृ २६,६.

पर्या-णहन- -नम् माश्रौ २, ५, ४, ३६.

---

a) =परि-पन्थिन्-। b) विप.। बस.। c) वैप १ द्र.। d) नाप. (अन्तिम-भाग- इति C. [शांश्रौ.]। e) वैप १,१९६१ e द्र.। f) =प्रधान-। नैप्र. < परि-आज्य- इति संभाव्येतेति भाष्यम्। व्यु.?। g) मलो. कस. पूप. =परियाण- इति ?।

पर्या-नह्य आपश्रौ १०,२७,१०.
**पर्या**(रि-आ)**√णी**, पर्याणयति हिश्रौ ११,७,१७; आग्निगृ ३, ५, ८ : ३; बौगृ; पर्याणयन्ति काश्रौसं २८ : १.
पर्या-णीय बौश्रौ ६,३:२७;७,३:१२; १६,२६:१; २१, ८:२७; हिश्रौ.
**पर्या**( रि-आ )**√तन्**, पर्यातनोति आपश्रौ ११,४,१५; भाश्रौ १२, ४,१८; हिश्रौ ७,४,४१.
**पर्यादि-** प्रमृ. परि द्र.
**पर्या**(रि-आ)**√धा**, पर्यादधाति कौसू ६१, ३२; †पर्याधत्त कौसू ६४, १४; पर्यादध्यात् अप्राय २,९[२].
पर्या-दधत्- -धतम् कौसू ६४,१४.
पर्या (रि-आ )धान-> °ने(न-इ) ज्या- -ज्ययोः वौध ४,६,७.
पर्या-हित- -तः वैश्रौ २०,२६ : ९.
**पर्या √नह्** पर्या√णह् द्र.
**पर्या**(रि√आ)**प्**, पर्याप्नोति बौश्रौ ७, १७ : ३; ८,७:१३;१३ : १३.
परी(रि-ई)प्सत्- -प्सन् वाधूश्रौ ३, २८ : १.
परी(रि-ई)प्सा- -प्सायाम् पा ३, ४,५२; ८,१,४२.
परी( रि-ई )प्सु- -प्सोः वाधूश्रौ ३, ३१ : ४.
पर्या(रि-आ)स,सा-(>पार्यासिक- पावा.) पावाग ४,४, १; -सायै वाधूश्रौ ४,७९ : २[a].
पर्या(रि-आ)सि- -सीः आपश्रौ २०, ११, ८; बौश्रौ १५, १८ : १५; ३२ : ५; ३६ : १२.
पर्यासि-त्वचन- -नेषु पा ३,३,६६
पर्यास्य(सि-अ)र्थ-ग्रहण- -णम् पावा २,३,१६.

**पर्या**(रि-आ)**√प्लु**, पर्याप्लवते बौश्रौ ६,१० : १; १०,१९ : १.
पर्याप्लावयति भाश्रौ १, २५, ६; भागृ २,२१ : ३.
**पर्या**(रि-आ)**√भू**, पर्याभवेत् वाधूश्रौ ३,३१ : ४; ३९ : १९.
**पर्याय-** परी(रि√इ) द्र.
**पर्या**(रि-आ)**√यत्**, पर्यायातयति बौश्रौ १४,२२ : १५.
पर्या-यातित- -ताः बौश्रौ १४, २२ : २२.
**पर्या**(रि-आ)**√यु** >पर्या-युवत्- -वन् माश्रौ १,१, २, ५; मागृ २,२,३.
**पर्यारिणी-** पर्यृ(रि√ऋ) द्र.
**पर्याली**[b](>°ली √कृ पा.) पाग १, ४,६१.
**पर्या**(रि-आ)**√वह्**, पर्यावहन्ति जैश्रौ ३ : ७;
**पर्या**(रि-आ)**√वृत्**, पर्यावर्तते बौश्रौ ३, २१ : १२; १८, ३२ : १४; ३३ : ६; कौसू २४, ३०; ४६, ११; या ७, १४†; पर्याववर्तते बौश्रौ १४,७ : १३;२६,७:१६; वाधूश्रौ ४,१०२ :३; पर्यावर्तन्ते या ७, २४; †पर्यावर्ते काश्रौ २५, ११, २१; कौसू ४६, ११; अप ३२,१,८; अअ ७,१००†; अपं ३ : ५४ पर्यावर्तेत आपश्रौ ६,३०,२; ९,१४,१; भाश्रौ.
परि ( आ···ववृत्यात् ) शांश्रौ १४,२४,५†.
पर्यावर्तयति भाश्रौ २, १०, ८; हिश्रौ २,४,२४; †पर्यावर्तयत्[c] माश्रौ १,७, ४, ५१; वाश्रौ १, ७,२,४३.

पर्यावरीवर्तते वाधूश्रौ ४,१०२ : ४.
पर्या-वर्तन- -नम् वाधूश्रौ ४,१०२ : ५.
पर्या-वर्तमान- -नः वैश्रौ १५,३५ : १४; हिश्रौ ८,८,२४.
पर्या-वर्तयत्- -यन् आपश्रौ ३, ७,१; वैश्रौ ७,६ : ८.
पर्या-वर्त्य आपश्रौ १, ११, १;१९, ३; वाश्रौ.
पर्या-वृत्त- -त्तस्य बौश्रौ ८, १० : १०; -त्ते आपश्रौ १५, २१, ८; बौश्रौ ९,२० : १७; भाश्रौ.
पर्या-वृत्य शांश्रौ २,९, १४; ४, ४, १२; ६,७,१०; आपश्रौ.
**पर्या** ( रि-आ ) **√श्रिष्**, पर्याश्रेषयते कागृ ४०,१६.
**पर्या**(रि√आ)**स्**, पर्यास्ते वाधूश्रौ ४, ९५ : ६; ७; पर्यासते, परि··· आसते या १२,३२†; पर्याध्वम्[d] आपमं २, १३, ७†; पर्यासीरन् आपश्रौ १५,१६,७; भाश्रौ ११, १६,१०; वैश्रौ १३,१८ : ३.
**पर्या**( रि-आ )**स-** पर्य(रि √अ )स् (क्षेपणे) द्र.
**पर्या**(रि-आ)**√सिच्** >पर्या-सिच्य भाश्रौ १२, ३, १५; वाश्रौ ३,२, ५,५७.
**पर्या**(रि√आ)**हृ**, पर्याहुः आपश्रौ १९, २४, ६; बौश्रौ १३, ३२ : १०; माश्रौ ५, २,२,११; हिश्रौ २२, ५,६.
**पर्या**( रि-आ )**√हृ** >पर्या-हृत्य शांश्रौ ७,५,४; १७,७,११; काश्रौ.
पर्या-ह्रियमाण- -णम् हिश्रौ २,८, २०.

a) °साय इति संस्कर्तुः टि. । b) तु. पासि., ⌊पक्षे⌋ भाण्डा. च । c) पामे. पृ १५२५ m द्र. । d) तु. संस्कर्तुः टि.; वैतु. हरदत्तः<परि√अस् ( क्षेपणे ⌊तु. भू XXV⌋) ।

**पर्युक्त-** परि√वच् द्र.

**पर्यु(रि√उ)क्ष्**, पर्युक्षति शांश्रौ ४, १८, ७; माश्रौ १, ६, १, १; वाश्रौ; पर्युक्षन्ते आश्रौ ६, १२, ७; †पर्युक्षामि[a] आश्रौ २, २, ११; माश्रौ १,६,१,१०; वाश्रौ १,५, २, १५[२]; पर्युक्षेत वागृ १, ३७; पर्युक्षेत् आश्रौ २, २, ११; १३; वाश्रौ.

पर्यु(रि-उ)क्षण- -णम् आश्रौ २, ४, २०; २५; शांश्रौ; कौगृ १, ५,२९?[b]; शांगृ १,९,१७; -णात् आश्रौ २,४,२२; -णे वागृ ४,३.

पर्युक्षणी- -णीम् कौसू ८७,२४; ८९,११.

पर्युक्षण-परिसमूहनो(न-उ) परिपुष्पकरण- -णैः वैश्रौ २,१:१४.

पर्युक्षण-वर्जम् द्रागृ १,५,१६.

पर्युक्षणा(ण-अ)न्त- -न्तान् गोगृ १,३,५.

पर्यु(रि-उ)क्षत्- -क्षन् वौगृ ३, ५, १९[c].

पर्यु(रि-उ)क्ष्य शांश्रौ २,६, १०; ४, ३,७××; काश्रौ.

**पर्यु(रि-उ)दय**[d]- -यम् काश्रौ ४,७, २२; १५,११.

**पर्यु(रि-उ)द्√अस्** (क्षेपणे) >पर्युदास- -सः पावा १,१,२७.

पर्युदास-सामर्थ्य- -र्थ्यात् पावा ६,४,१७१; ७,३,८५.

**पर्यु(रि-उ)प√धा**, पर्युपदध्यात् आपशु २०, २; ७; हिशु ४, १४; ६, ३९; ४७.

**पर्यु(रि-उ)प√लिप्**, पर्युपलिम्पति गोगृ १,५,१४.

**पर्यु(रि-उ)प√विश्**, पर्युपविशेते आपश्रौ २०,१९, ६; पर्युपविशन्ते वैश्रौ १५, १३ : १; २४ : ७; हिश्रौ ८,३, ३२; १३, ६, २५; पर्युपविशन्ति आश्रौ ६,१०, १३; काश्रौ ७, ६, १५; ९, ४, १; आपश्रौ ९, ११, २३[e]××; बौश्रौ; हिपि २३ : २७[e]; पर्युपविशेयुः बौश्रौ २०, १६ : ३५.

पर्युपविश्य काश्रौ १२, २, ४; आपश्रौ २१,१०, १३†; बौश्रौ; आग्निगृ ३,१०,५: १०[e].

पर्युप-वेशन- -नम् काश्रौ ९,५,१०.

पर्युपवेशन-सामर्थ्य- -र्थ्यात् काश्रौ ९,५,१.

**पर्यु(रि-उ)प√स्तृ,स्तॄ** > पर्युपस्तारम् बौश्रौ १०, ५३ : १.

पर्युप-स्तीर्य बौश्रौ २०, २४ : ३८; २४, ३३ :२२.

**पर्यु(रि-उ)प√स्था**>पर्युप-स्थित, ता- -ता नाशि २, ८, २; -ते अप ७०[२],१६,४.

**पर्यु(रि-उ)पा(प√अ)स्** (क्षेपणे), पर्युपास्यति बौश्रौ १२,१० : १३.

पर्युपा(प-अ)स्य बौश्रौ १०,५७:२१; ११,७,१०××; नाशि २,८,७.

**पर्यु(रि-उ)पा(प√आ)स्**, पर्युपासते शंध ४४०; बृदे २,४९.

पर्युपासयेत् आग्निगृ २,४,७:१७.

पर्युपा(प-आ)सित- -तम् बौध ३, १,२२.

**पर्यु(रि-उ)पो(प√उ)ष्** (दाहे),पर्युपोषेत् बौश्रौ २०,३१ : २२.

पर्युपो(प-ओ)षण- -णम् बौश्रौ १४, १३ : १४; -णे बौश्रौ २०,३१ : २२.

**पर्युप्त-** परि√वप् द्र.

**पर्यु(रि-उ)लूखल**[d]- (>पार्युलूखल्य- पावा.) पावाग ४, ३,५८.

**पर्यु(रि√उ)ष्**, पर्योषति माश्रौ १, ७,६,५४; ८,६,२३.

**पर्यु(रि-उ)षित-** परि√वस् (निवासे) द्र.

**पर्युह्य**, पर्युह्यमाण-, °माना परि √वह् द्र.

**पर्यू(रि√ऊ)ह्** (प्रापणे), पर्यूहते माश्रौ २, ५, ५; १०, ६, ११, पर्यूहति काश्रौ ६, ३, ९; ८, ५, २२; आपश्रौ १५, ४, ९; बौश्रौ; पर्यूहतः भाश्रौ ११, ८, २; †पर्यूहे द्राश्रौ ३, ३, २४; लाश्रौ १,११,१५; †पर्यूहामि आपश्रौ ११,१३, ७; १५, ४, ९; बौश्रौ; †पर्यूह बौश्रौ १,८ : ७;१०××; हिश्रौ १,६,१२.

पर्यू(रि-ऊ)हण- -णम् हिश्रौ ७, ७,९.

पर्यूहण-परिदंहण-परिषेचन- -नानि आपश्रौ ११,१०,३.

पर्यूहणा(ण-आ)दि- -दि काश्रौ ८, ५, ३१; -दीनि वैश्रौ १४, ११ : २.

पर्यू(रि-ऊ)ह्य आपश्रौ १,१२,३; २, ५,६××; वैश्रौ.

**पर्यृ(रि√ऋ)**>पर्या(रि-आ)रि(न्>)णी[f]- -णी आपश्रौ १९,१६,११; बौश्रौ २४,३८: १२; हिश्रौ २२, १,८; -णीः बौश्रौ १५,७ : ३[g]; -णीम् माश्रौ ५, २,१,२३.

---

*a*) पाभे. वैप २,३खं. परिषिञ्चामि तैब्रा २, १, ११,१[२] टि. द्र.। *b*) °णनम् इति पाठः? यनि. शोधः (तु. शांगृ.)। *c*) वैतु. मैसू [१९०४ ई.] °क्ष्यन् इति। *d*) अस.। *e*) पाभे. पृ ३०३ n द्र.। *f*) वैप १,१९६२ j द्र.। *g*) = आहुति-।

पर्यृ(रि√ऋ)ष् (गतौ), पर्यृषति शांश्रौ १७,१०,९; १५; काश्रौ ६, ३, १०.

पर्ये(रि-आ√इ), पर्यायन्ति वाश्रौ ३, २,५,४७; †पर्येहि आपश्रौ ३, १९,६; माश्रौ ३,१७,४; माश्रौ.

पर्ये(र्या-इ)त्य शांश्रौ १५, १८, १; १९,१; १७,११,४.

पर्येषणा- परी(रि√इ)ष् द्र.

पर्येहि[a]- (>°ही- पा.) पाग ४, १, ७३.

पर्यो(रि-ओ)ष्ठ- (>पार्योष्ठ्य- पावा.) पावाग ४,३,५९.

√पर्व् पाधा. भ्वा. पर. पूरणे.

पर्व[b]- -र्वः नाशि १, ६,८; -र्वे भाश्रौ ६,१५,१४; माशि २,१०.

१पर्वत[c]-(>१पार्वत- पा.) पाग ४, ३,९३.

२पर्वत[d]- पाउ ३, ११०; पावा ५,२, १२२; -तः आश्रौ २,१३, ७†; शांश्रौ ३, १५, १५; आपश्रौ; अप ४८, १००[e]; बृदे २, ३[f]; निघ १, १०†[e]; या १, २०ф; ६,५; ७,१०; ९,८; -तम् कौसू ५१,७; अप; शंध ११६:५[g]; या १०, ९†ф; -तस्य काश्रौ १५, ६, ८†; वौश्रौ; -ताः आपश्रौ १४,२७,७†; भाश्रौ १०, १८, १०†; हिश्रौ; या ९, ९†; -†तान् आश्रौ ८,११,१; शांश्रौ ६, १०, २; कौसू; -तान् आश्रौ ६,२,११†; शांश्रौ ८,२५, १†; हिश्रौ; -†तानाम् आश्रौ ६, १४, १८; ९, ५, २; २८, १३; आपश्रौ; पागृ १, ५, १०[h]; या ९,३९; ११, ३७ф; -तानि अप ६८,१,४९[i]; -ते बौश्रौ १०,४ : २८†; माश्रौ ६,२, ४,८; गोगृ; पा ४, ३,९१; ५,४,१४७; -तेन आश्रौ ६,६,११; आपश्रौ ९,१२, ४; १४, २२, ३†; भाश्रौ; -तेषु कौसू ११५, २†; अप ६२,३,४; शंध ९९; विध ८५, ५८; ९९, १६; -†तैः[j] बौश्रौ २, १० : ३; आपमं २,१९,४; आग्निगृ.

†२पार्व(त>)ती[d]- -ती[k] माश्रौ १,२, २,२६[3]; वाश्रौ १, २,४, ६१; ६२[2]; -†त्यः[l] अप ४८, ७६; निघ १,१३.

†पार्वते(य>)यी[d]- -यी[k] आपश्रौ १,२१, ३; बौश्रौ १,७ : ७; भाश्रौ १,२३,३; वैश्रौ ४,८: ५; हिश्रौ १,५,८१.

पर्वत-ना[m]- -गाः बौश्रौ १८,४७:७.

पर्वत-नामन्- -मभिः या २,२१.

†पर्वत-पूरुष[n]- -षम् आपमं २, ९, १; हिगृ १,११,५.

पर्वत-भेषज- -जम् आपमं २,९,१†

पर्वत-मस्तक- -के विध ७०,१७.

†पर्वत-वर्चस- -सम् बौश्रौ १७, ४२ : ५; आपमं २,९, १; भागृ २,२२ : ७.

पर्वत-वत् बृदे ४,५.

पर्वता(त-अ)ग्र- -ग्रम् अप ६८,२, ४; -ग्रात् अप ६८,५,२.

पर्वता(त-अ)न्तरय[o]- -ये आपश्रौ १४,२०,४†.

पर्वता(त-आ)युष- -षम् आपमं २, ९,१†.

†पर्व(त>)ता-वृध्[d]- -वृधः ऋअ९,१७.

पर्वति[d]- -तिः बौश्रौ १,७ : ७[k].

पर्वतीय- पा ४,२,१४३.

पर्वते-ष्ठा[d]- -ष्ठाम् या ६,३†.

†पर्व(त्य>)त्या[p]- -त्या[k] आपश्रौ १, २१, ३; बौश्रौ १, ७ : ६; भाश्रौ १,२३,३; वैश्रौ ४,८:४; हिश्रौ ७,५,९.

३पर्वत[q]- -तः ऋअ २,८, १२; साअ १, ३८४; ३९४; अअ २०, १११?[r].

पार्वतायन-, पार्वति- पा ४,१, १०३.

३पार्व(त>)ती- -तीम् शंध ११६: २५.

पर्वत-नारद- -दयोः चाअ ३९: ९; -दौ शांश्रौ १५,१७,१; ऋअ २, ९,१०४; साअ १,५७४; ५७५.

?पर्वताष्ठीराः सु २५,५.

पर्वन्[d]- पाउ ४, ११३; -र्व आपश्रौ १, ३, १३†; †बौश्रौ १, २ : ११××; भाश्रौ; या १, २०ф; ६,२०†;११,३१; -र्वणः शांश्रौ ३,११,९;१३; हिश्रौ ३,५,२०; २८;५,१,२;-र्वणःऽ-र्वणः काश्रौ ५,११,३०; -र्वणा निसू ८,९: १२; शौच ४, ७७; शुप्रा ५, ७; -र्वणाम् आश्रौ ९,२,२; आपश्रौ ८,२२,४; कौसू; -र्वणि आश्रौ

a) अर्थः व्यु. च ?। b) =पर्वन्-। c) =देश-विशेष-। व्यु. ?। d) वैप १ द्र.। e) =मेघ-। f) =वज्र-। g) लोकालोकपालाऽन्यतम-। h) पाभे. वैप १,१९६३ c द्र.। i) अर्धर्चादित्वं - द्र.। j) पाभे. पृ ९८७ i द्र.। k) पाभे. वैप १,१९६४ c द्र.। l) नदी-नामन्-। m) उस. उप. <√गम्। n) उप. =पौरुष-। o) षस. उप. भाप. (<अन्तर्√इ)। p) वैप १,१९६४ m द्र.। q) =ऋषि-विशेष-। व्यु. ?। r) पा° इति पाठः? यनि. शोधः।

प्रदीपीय-, °दीप्य- पा ५,१,४.
प्र-दीपित->°पित-पथ[a]- -थम् अप ६४,२,१.
प्र-दीप्त,प्ता- -प्तः अप ३८, ३, २; ७०[३],२,२; –प्तम् काश्रौ ८, ७, १; आगृ ३,१०,११; –प्ताः अप ६५,१,७; –प्ताम् आश्रौ २, ३, १६; काश्रौ ४,१४,१४; वैताश्रौ ७,१०; अप ४५, १, १९; –प्ते आश्रौ १, ४, ९; –प्तैः अप ६३, २,३.
प्रदीप्त-तम- -मे काश्रौ ४, १५, १७.
प्रदीप्त-लक्षण[a]- -णाः अप ५८, १,६.
प्रदीप्ता(प्त-अ)ग्र[a]- -ग्रः अप २४, ३,४.
प्रदीप्ता(प्त-अ)यःपिण्ड-लोह-कण्टक—शयन[b]- -नानि शंध ३७४.
प्रदीप्ते(प्त-इ)न्द्रयष्टि-पाद—भग्न[c]- -ग्ने अप ७२,३,८.
प्र-दीप्य आपश्रौ १५,३, १७; १३, ३[३]; भाश्रौ; प्रदीप्यऽप्रदीप्य काश्रौ १०,६,१४; २६,७,३.
प्र-दीयमान- प्र √दा द्र.
प्र√दुष् > प्र-दुष्ट- -ष्टे अप ७०[३], ११,२६.
†प्र√दुह्, प्र…दुहते बौश्रौ १४,५ : ४९; माश्रौ २,३,६,१५.
प्र√दॄ,दृ(वधा.)>प्र-दर[d]- -रः बौश्रौ ९, ४ : २१; १७ : ९××; वैश्रौ १३,६ : ७; -रात् काश्रौ २१, ४, १०; वाध ३, ३५; -रे आपश्रौ १४,१३,१४××; बौश्रौ.
प्रदरो(र-उ)दक- -के आपध १, १५,५; हिध १, ४,६४.
प्र√दृश्, प्रदृश्यते अप १,५,७; ३२, ३××; बृदे २, १३२; नाशि २, २, १७; प्रदृश्यन्ते अप ५२, ८, २; ६४,५,५××; कौशि २४.
प्रदर्शयति वैश्रौ ५, ३ : १३; प्रदर्शयेत् आग्निगृ २, ७,६ : ३१; शंध १०९; विध २३, ३७; ऋप्रा.
प्र-दर्शक- -कः ऋप्रा १०,१५.
१प्र-दर्शन- -नम् अप ६४,३,२;५, ६;७०[२],१६,१; ऋप्रा ११,२७; माशि १०,२.
२प्र-दर्श(न>)ना[a]- -नाः अप ५८, १,५.
प्र-दर्शित,ता- -तम् जैश्रौका १२१; –ताः अप २३, १, २; बृदे ५, २५.
प्र-देया- प्र √दा द्र.
प्र-देश- प्रमृ. प्र √दिश् द्र.
१प्र-दो(षा>)ष[d]- -षः कौसू १४१, ३५?; –षम् माश्रौ १,६, १,८; वाश्रौ १,५,२,७; पागृ ३, ४,८; –षात् अप ६३,१,९; –षे आपश्रौ ६, ४, ८; बौश्रौ; कौसू १४१, ३७?[e].
प्रादोष-, °षिक- पा ४,३,१४.
प्रदोषक- पा ४,३,२८.
प्रदोष-चारि(न्>)णी- -णी भागृ १,२३ : १६†.
प्रदोषा(ष-अ)न्त[a,f]- -न्तः आश्रौ ३,१२,१; वैश्रौ २,२ : ११.
२प्र-दोष[a]- -षः अप २०,७,८.
प्रदोहन[g]->प्रादोहनि- (> °ह्नायन- पा.) पाग २,४,६१.
प्र√द्युत्, प्रद्योतयति बौगृ ३,८,२.
प्रद्युम्न[h]- पाग ४,१, ९६; -म्नम् शंध ११६ : ६५; -म्नाय विध ६७,२.
प्राद्युम्नि- पा ४,१,९६.
प्र√द्रु, †प्रद्रव आश्रौ ६, ४, १०; शांश्रौ १८, १३, ७; आग्निगृ ३, ६,३ : २५; ७, ४ : १६; बौपि; †प्र…द्रव उनिसू ५ : ३०; प्र (द्रव) ऋअ २, ९, ८७; साअ १, ५२३[२]; †प्र (अद्रवत्) शांश्रौ १२,२,१४; आगृ ३,१२, १२; प्रद्रवेत् द्राश्रौ ११, ३,१३; लाश्रौ ४,३,१४.
प्रदुद्राव या १२,१०.
प्र-द्रव[i]- -वाणाम् वाधूश्रौ ३, ८३ : २.
प्र-द्राव- पा ३, ३, २७; -वान्[j] बौश्रौ १५,६ : २३;९ : १२.
प्र-द्राविन्- पा ३,२,१४५.
प्रद्राविणी- -णी कौसू ८९,९.
प्र√द्विष्, प्रद्विष अप ३६,९,३.
?प्र-धक्षत्- प्र √दह् द्र.
प्र√धन् > प्र-धन[d]- -नः या ९, २३; -ने या ९, २३[२]†ф.
†प्र√धन्व्, प्रधन्वति बौश्रौ १४,८ : ३६; प्रधन्व>न्वा ऋप्रा ८, ७; साअ १,५६७[२]; प्र (धन्व) ऋअ २,९,१०९.
प्र (अधन्विषुः) ऋअ २,९, २४; साअ २,३११.
प्र√धम्, प्रधमन्ति बौश्रौ १५,३७ : ४.
प्र√धा, प्रदध्यात् अप्राय २,९.

---

a) विप. । बस. । b) कस.>द्वस.>बस. । c) कस. >षस. >षस. । d) वैप १ द्र. । e) पदोषे (प्रदोषो इति सूको.) पाठः? यनि. शोधः । f) पूप. = कालपरिमाण- इति [पक्षे] भाष्यम् । g) = ऋषि-विशेष- । व्यु. ?। प्र-दो° इति MW. । h) व्यप. । व्यु. ? । i) = प्र-द्राव- । j) = मन्त्र-विशेष-, (उपचारात्) होम- ।

प्र-धान,ना[a]- -नः भागृ १,११ : ५; अप ७०[२],७,९××; -नम् शांश्रौ १,१६,३; काश्रौ; -नस्य हिश्रौ १, १, ६३; कप्र; -ना वैगृ ३, २० : २; अप ५९, १, ८; विध ९९, ४; -नाः वैगृ २, १२ : ५; अप; -नात् आश्रौ २, ११,१६; आपश्रौ २,२१,२; मीसू १०,१, ५; -नान् वैगृ २,१३ : १५××; वैध २, १, ९; -नानाम् वाश्रौ १,१,१,६५;७०; हिश्रौ; -नानि आपश्रौ ३,१६, १०××; वाश्रौ; -ने शुप्रा २, २७; पावा; -०ने विध ९९, ३; -नेन मीसू ४,३, ३८; ६,३,३; ११, २, ७; -नेषु वाश्रौ १,१,५, १४; बृदे ५,९६; मीसू ४,४,३२; -नैः आपध २, ८,१३; हिध २,१,११५.

प्राधान्य- -न्यम् कप्र ३,१०, ९; बृदे १, ७५××; मीसू; -न्यात् काश्रौ ५,११, १९;१५, ४,१८××; -न्ये हिश्रौ १७, १, २६; -न्येन बृदे १, ६; या १, २०; २,१३;२४; ११,२.

प्राधान्य-तस् (:) बृदे ५, १०७;८,६२.

प्राधान्य-स्तनित- -तानि अप ६४,५,२.

प्राधान्य-स्तुति[b]- -ति या ७,१३; -तीनाम् या १,२०; ७,१.

प्रधान-कर्मन्- -र्मणि पावा १, ४,५१.

प्रधानकर्मा(र्म-अ)र्थ-त्व- -त्वात् मीसू ११,१,५३.

प्रधान-कारिन्- -रिणः वाश्रौ १, १,१,१४.

१प्रधान-काल- -ले आग्निगृ १, ७,४ : १०.

२प्रधान-काल[b]- -लेषु बौगृ ३, २,५.

प्रधानकाल-त्व- -त्वात् काश्रौ ४,७, २२; २६, ६, २८; मीसू ११,१,६८.

प्रधान-गुणभू(त>)ता- -ताः बृदे ५,९६.

प्रधान-तर->°र-च्छन्दस[b,c]- -सः निसू ७,५ : १३.

प्रधान-तस्(:) बौध १,१०,३७; बृदे ५,११०××; मीसू १,४,३.

प्रधान-ता- -ता अप २२,६,४.

प्रधान-त्व- -त्वम् कप्र ३, १०, १०; -त्वात् पागृ २, ५, २०; मीसू ३, ७, १९××; -त्वे अप ७०,१,६.

प्रधान-देवता- -ताः मागृ २, ६, ४; -ताभ्यः हिपि २० : १२; -ताम् बौश्रौ २९,२ : ५.

प्रधान-द्रव्य-व्यापत्ति- -त्तौ काश्रौ १,७,२७.

प्रधान-पूरणी-ग्रहण- -णम् पावा ५,४,११६; ६,३,३३.

प्रधान-प्रत्ययार्थ-वचन[d]- -नम् पा १, २,५६.

प्रधान-भाव- -वात् पावा २,१, ५७; ३,४,१०२.

प्रधान-भूत- -तानाम् आश्रौ ३,१४,६; -तानि मीसू २,४,७.

प्रधानभूत-त्व- -त्वात् मीसू ६,२,५; १०,८,३६.

प्रधान-याग- -गात् वैश्रौ २०, १९ : ५.

प्रधान-योग- -गात् काश्रौ १, ४,१७.

प्रधान-लोप- -पे अप्राय ४,२.

प्रधान-वत् मीसू ६, ४, ४; ११, २,६; ३,३१.

प्रधान-वैगुण्य- -ण्यात् मीसू १२,१,१५.

प्रधान-शब्द-त्व- -त्वात् मीसू ५,२,१९; ११,२,१०;४,२४.

प्रधान-शब्द-संयोग- -गात् मीसू ४,३,२४[e];१०,८,५३.

प्रधान-संयोग- -गात् मीसू १०, १, ४.

प्रधान-संनिपात- -ते हिश्रौ १, ६,४१.

प्रधान-हविस्- -वींषि आश्रौ २, १५,८.

प्रधान-होम-मन्त्र- -न्त्रान् वैताश्रौ १,४.

प्रधाना(न-अ)ङ्ग- -ङ्गे या ९,३१.

प्रधाना(न-आ)दि- -दौ बौगृ ४, ५, ५; -दौऽ-दौ बौगृ ३, १३, २; ४,६,२.

प्रधाना(न-अ)न्त- -न्ते बौगृ ४, ५, ६.

प्रधाना(न-आ)नन्तर्य- -र्यम् हिश्रौ २२,४,२०.

प्रधाना(न-अ)पवर्ग- -र्गे मीसू ११,३,१७.

१प्रधाना(न-अ)र्थ- -र्थम् अप ६२,४,७?[f].

२प्रधाना(न-अ)र्थ[b]- -र्थः कप्र ३,१०,१४; -र्थम् मीसू १०,३,

a) विप., नाप. । कर्त्राद्यर्थे कृत् (तु. अभा.)। b) बस. । c) विप. समासान्तः अच् प्र. उसं. (पा ५, ४, ७५)। d) कस. > कस. (तु. पासि.)। e) °संप्रयो° इति जीसं. प्रमृ. । f) पाठः ? विधानार्थम् इति शोधः (तु. संस्कर्तुः टि.)।

११; -र्थस्य मीसू ११,३,१८.
प्रधानार्था(र्थ-अ)भिसंयोग- -गात् मीसू ११,२,४.
प्रधाना(न-अ)वभृथ- -थः अप ३३,७,६.
प्रधाना(न-आ)हुति- -तीः वाश्रौ १,३,४,२९; आग्निगृ १, ६, २ : ८; ३,११,४ : ११; आपगृ.
प्रधानाहुति-काल-लस् (:) जैश्रौका ४०; ६४.
प्रधानाहुति-वेला- -लायाम् जैश्रौका ३९.
प्रधाने(न-इ)ज्या- -ज्यायाः काश्रौ २५,५,१५.
प्रधानो(न-उ)पसर्जन- -नानाम् पावा २,१,६९.
प्र-धि[a]- -धयः या ४, २७†कृ; -धिः या ४, २७; -†धी ऋप्रा २, ७२; तैप्रा ४, १२; -धीन् बौशु ७ : १२; -धीनाम् बौशु १८:५;२१:५; -धौ आपशु १३, २; बौशु १६ : ६; हिशु ४, ३४.
प्रधि-क- -कम् आपशु ७, ८; हिशु २,५८.
प्रधि-प्रकार[b]- -रे माश्रौ २, २, ३,३५.
प्रधि-मध्य(ग>)मा[c]- -माः बौशु १८ : ५; २१ : ५; -माम् बौशु १८ : ७.
प्रधि-मुख[b]- -खे आपश्रौ ११, १३,१; हिश्रौ ७,६,२८.
प्रधि-युक्त- -क्तानि बौशु १६:२.
प्रध्य(धि-अ)नीक- -केषु बौशु ७ : १३; १६ : ७.
१प्र-हित- -तः या ४, २७; -तम् आश्रौ ३,१०,१६[d].
प्र-धान- प्र√धा द्र.
प्र√धाव् (गतौ), प्रधावति शांश्रौ ३, ८,२७†; अप ५८[२], २, ७××; प्र··· धावतु आपमं १,१५,६.
प्र√धाव् (शुद्धौ), प्रधावते आग्निगृ १,३,३ : ६[e]; प्रधावतः आपश्रौ ८,८,१६; १३,२१,२.
प्रधावयेत् कप्र १,१०,२.
प्र-धाव्य बौश्रौ १७, ४० : २१; आग्निगृ १,३,३ : ६.
प्र√धास्[f], प्रधास्येत् भाश्रौ १०, १२,१४[g].
प्र-धुर[h]- -रे आपश्रौ १२, २, १२; ६,११; माश्रौ.
प्र√धूमाय (<धूम-), प्रधूमायन्ति अप ७२,४,४.
प्र√धृ, प्रधारयन्तु आगृ ३,१२,१४†.
प्र√धृष् >प्र-धृष्यमाण- -णाः आश्रौ २,११,१८.
प्र-धृष्टि- -ष्टिः शांश्रौ ८,२४, ३†.
प्र√धे, प्रधापयेत् मागृ १, १७, ७; वागृ २,९.
प्र√ध्यै, प्रध्यायत गोगृ ३,१०,१७†.
प्र√ध्वंस्, प्रध्वंसयते बौश्रौ ४,११ : १२; १६; २०; १४, १३ : १८; प्रध्वंसयति वैश्रौ १३,१७ : १०; हिश्रौ १,५, ६३; २४, ६, १२; प्रध्वंसयेत् बौगृ ४, २, ६; हिगृ १,१६,४†.
†प्र√नभ्, प्रनभताम् अप्रा ३,१, ७; प्रनभस्व कौसू ४१,१; १०३,३; अप ६५,३,२; ४; अअ.
?प्रनाकाफान[1] आश्रौ २,१०,१४.
प्र√नृत्, प्रनृत्यन्ति अप ७०[३],८, ३.
प्र-नृत्त- >°त्त-प्रेतमार्जारवाराहा- (ह-अ)नुग (त>)ता- -ताः अप ५८[२],३,१.
?प्रन्यतिशिल्पे वाश्रौ ३,२,२,१४.
प्र√पच् > प्र-पाक[j]- -कम् कौसू ८३,१४; ८४,३.
प्र√पञ्च् >प्र-पञ्च- पाग ८,१,२७.
प्र√पठ्, प्रपठ्यते अप २३,११, २.
प्र-पठित- -तम् उसू ८,३६.
†प्र-पण[a]- -णः शौच ४, ९७; -णम्[k] भागृ २, २६ : ७; हिगृ.
†प्र-पणत्- -णन् आपमं २,२२,४[k].
प्र√पत् (गतौ), प्रपतति अप ३७, १७,१; प्रपतन्ति अप ५१, ४, २; ५७,२,४; ६८, १, ४७; या २, ६; प्रपतात् मागृ २,१७, १†[l]; प्रपतान् या २, ६†; †प्रपत भागृ २, २८ : १६; कौसू १८, १६; अप; प्रपतत अअ ६, ८३†; अपं २ : ५६; प्रपताम पु ८,४; प्रपतेत् आपश्रौ २२, २१, १०; बौश्रौ ९, १७ : ६; १६; वाधूश्रौ; या ७, ३†; प्र··· पतेत् वाधूश्रौ २, २० : १; प्रपतेयाताम् अप्राय ६,१.
प्र (पिपतिपति) अअ १२,२†[m].

a) वैप १ द्र.। b) वस.। c) =इष्टका-। d) पाभे. वैप २,३खं. प्रभृतम् तैब्रा १, ४,४, १० टि. द्र.। e) सपा. बौश्रौ १७, ४० : २१ विधावयते इति, बौगृप १, ३,३० विधावते इति च पाभे.। f) =प्र√धा (प्र√हा [त्यागे])। g) सप्र. वैश्रौ १२, १४ : ९ त्वरया स्वयं प्रयाति इति पाभे.। h) नाप.। प्रास. समासान्तः अच् प्र. (पा ५, ४, ७४)। i) पाठः ?। पाभे. वैप २, ३खं. ?कनात्काभाम् तैब्रा २,४,६,५ टि. द्र.। j) उप. कर्मणि घञ् प्र.। k) पाभे. वैप १,२१८०g, २१५० b च द्र.। l) पाभे. वैप १, २१८० k द्र.। m) पाभे. वैप १,२१८० i द्र.।

प्र-पतत्– -ततः काग्ट ४०, १३; वागृ ४,१४.

प्र-पतन– पाग ३,४,७४.

प्र-पतित,ता– -तः अप्राय २, ९; –तम् वाधूश्रौ ३,७७ : २; –ता वाधूश्रौ २,२० : ६.

प्र-पात– -ते पावा ३,३,१०४.

प्र-पथ[a]– -थात् वाधूश्रौ ३,१८ : ११; –†थे आश्रौ ३, ७, ८; शांश्रौ १५, १९, १; बौश्रौ; या ११, ४६.

प्र√पद्, प्रपद्यते आश्रौ १,१, ४; ५, १२,१; आपश्रौ; कौगृ ३,२,६[b]; प्रपद्येते बौश्रौ ७, ११ : ३; बौध १,७, २१; वेज्यो ७; प्रपद्यन्ते बौश्रौ ७,११ : १०××; माश्रौ; †प्रपद्ये आश्रौ १,२,१; ४, ८[१३]; २, ५, १७[c]; शांश्रौ; वैश्रौ १८, १४ : १५[c]; हिश्रौ ६, ७, ८[c]; आपमं १,१०,३[d]; ६[d]; कौगृ ३, ४, ३[c]; काग्ट २७, ३[c]; बौगृ १,५,७[c]; ६,१२[d]; मागृ १,१९ : १४[d]; १७[d]; मागृ २, ११, १६[c]; वागृ १५,१७[c]; प्रपद्यामि अप २०,६,१; प्रपद्येताम् सु २, २; प्रपद्यस्व वृदे ६, २२; प्र··· पद्यस्व बौगृ २,६,१४; प्रापद्यत वाधूश्रौ ४, २६ : २८; २९××; प्रपद्येत आश्रौ २, ५, १७; आपश्रौ १२, २६, १४; बौश्रौ; शांगृ ३, ४, ९[b]; ?प्रपद्यात् शंध १०३; प्रपद्येरन् वैश्रौ १२, १२ : १; वैगृ ५, ६ : ८; बौध १, ७, १७; प्रपद्येयम् मागृ २, १३,६†.

प्रापत्सत बौश्रौ ७,७ : १५.

प्रपादयति आपश्रौ ११, १७,८; १२,६,९××; बौश्रौ; प्रपादयन्ति शांश्रौ ५,६,४; वैश्रौ; प्रपादयीत हिश्रौ १०,४, १३; मागृ १,१४, १; प्रपादयेत् बौश्रौ २५, ९ : १३××; वागृ २,१; १५,१४.

प्र-पत्स्यमान– -नाः शांश्रौ ६,१२, १२.

प्र-पद्[e,f]– -पदः शांश्रौ ६,२,१.

१प्र-पद[e]– -दः गोगृ ४,५,७; –दम् गोगृ ४,५,१४; द्राग्ट १,२, २२; ४,१,७; कप्र १,९,५.

प्र-पदन– -नम् बौश्रौ २४,२८ : १; २७,१२ : १९; वाधूश्रौ ३,८१ : २; जैश्रौ ८ : ३; –नस्य जैश्रौ १३ : १; १८ : १.

प्रपदना(न-अ)न्त– -न्तम् वैताश्रौ १,१९.

प्रपदनीय– पावा ५,१, १११; –यः कौगृ ३,४,३[g].

प्र-पद्य आश्रौ १,१,२३××; शांश्रौ.

प्र-पद्यमान,ना– -नः काठश्रौ १४०; –नम् आश्रौ ४, १०, ५; बौश्रौ २५, २० : १३; –नान् वैगृ ५, ६ : ६; –नाम् वृदे ७, १३१; –ने भागृ १, २३ : २०[h].

प्र-पन्न,न्ना[i]– -न्नः बौश्रौ ४,४:११; २५, २० : १०; अप ४, ३, ५; –न्नम् गोगृ ३, ५, ७; जैगृ १, १९ : २६; वृदे ६, १५२; –न्ना बौश्रौ ६, २६ : २९; विध १, ५८; –न्नाः बौश्रौ १७,१२ : २; –न्ने बौश्रौ ६, २४ : १३; जैश्रौ ३ : ९.

प्रपन्न-द्विःपक्व-पर्युषित– -तानि द्राग्ट ३,१,३६.

प्र-पादयत्– -यन् आपगृ ६,८.

प्र-पाद्य आश्रौ ३, १, १६; ६,१०, २०; काश्रौ; शांगृ १,१५,९[j].

प्र-पाद्यमान,ना– -नाम् वैताश्रौ १३, ५; –नासु आपश्रौ १४, ९, ३; हिश्रौ १०,८,४१; –ने आश्रौ ४, ४,५; १०,१३; शांश्रौ ५. १४, १७; २२.

२प्र-पद[k]– -दात् कौसू ७, १७××; –†दाभ्याम् आपमं १, १७, ४; अअ ११,३(२); –देन आश्रौ १, १,२३; ४,४,२; शांश्रौ.

३प्र-पद[l,m]– -दः माशि १४,७[२].

प्र√पश्, प्रपश्यन्ति अप ६८,१,१३; प्रपश्यामि विध २०, २२; †प्रपश्य[n] आपश्रौ १८, ६, ४; वाश्रौ ३, १,२,२४; हिश्रौ १३, २,१८; प्रापश्यन् या ७,२९†.

प्र√पा (पाने), प्रपिबन्ति या ११,५.

प्रपाययति काग्ट ३४,६.

प्र-पा[a]– पावा ३,३,५८; –†पा अअ ३,३०; ऋप्रा २, ५९; तैप्रा १०, १३; अप्रा २,२,१५; –पाः वाध १९,१८; –पाम् कौसू १२, ९; १९,३.

प्रपा(पा-अ)न्त[l,o]– -न्तानि कौसू ३५,१९.

a) वैप १ द्र. । b) सपा. °द्यते <> °द्येत इति पाभे. । c) पाभे. वैप १, १०२४ d द्र. । d) पाभे. वैप २, ३खं. उपधात्रासि मंत्रा १, ४, १ टि. द्र. । e) =मन्त्र-विशेष- । f) वैप २, ३खं. द्र. । g) सपा. शांगृ ३,५,३ प्रवचनीयः इति पाभे. । h) °द्या° इति पाठः? यनि. शोधः । i) उप. कर्तरि कृत् । j) सपा. कौगृ १,९,१३ प्रवेश्य इति पाभे. । k) =पादाग्र- । प्रास. । l) बस. । m) उप. =सुबन्तादि- । n) प्रपश्येत् इति C. । o) न्त° इति पाठः? यनि. शोधः (तु. संस्कर्तुः टि.) ।

प्र √पा (रक्षणे), प्र···पाहि वौगृ २, ६,१४†[a,b].

प्र-पात- प्र √पत् द्र.

प्र-पादयत्- प्रमृ. प्र √पद् द्र.

प्र-पितामह[c]- -†०ह आश्रौ २, ६, २४; आपश्रौ १, ९, १५; बौश्रौ २, १० : २५[d]; २६; ३, १० : २२[d]; ५, १५ : ६××[d]; २४, ३२ : १८[d]; वाश्रौ १,२,३,१६[d]; १८; हिश्रौ २,७,२७[d]; आपमं २, १९,१६; २०,१०[d]; आगृ; आग्निगृ ३,१, ३ : ७[d]; भागृ २, १३ : १[d]; हिगृ २,१२,३[d]; -हः बौश्रौ २४, २६ : १४; जैश्रौ; -हम् आपश्रौ २, २१, ७†[e]; बौश्रौ; -हस्य शांश्रौ ४, ४, ४; बौश्रौ; -†हाः आश्रौ २, ६, १४; आपश्रौ; -†०हाः जैश्रौ १८ : १७; आग्निगृ ३, १, ३ : १५; १६; भागृ २, ११ : ६; -†हात् बौश्रौ २, १० : ६[f]; माश्रौ १,७, ६, ४६; आपमं २, १९,६[f]; आग्निगृ ३,१, १:१८[f]; बौगृ २,११, २७[f]; भागृ २,११: १७[f]; हिगृ २, १०, ७[f]; विध ७५, ६$; -हान् आग्निगृ २,६, ३ : ४६××; वैगृ ४,६ : ३; बौध २,५,२८[२]†; -†हानाम् आग्निगृ ३,१,२ : २०; २,३ : ९; बौगृ; -हाय आश्रौ २,६,१५; ६,१२, ९[g]; बौश्रौ; माश्रौ २,५,४,११[g]; -हे विध ७५, ३; -हेभिः भागृ ३,१७:९; -†हेभ्यः आपश्रौ १, ९,९; बौश्रौ; आग्निगृ ३,१, ३ : १०[g]; कौसू ७३, ६[g]; -†हैः बौश्रौ ६, ३१ : २२; बौपि २,१२,४.

प्रपितामही- -०हि आपमं २, २०, १३†; -†ही आपमं २, १९,५; आग्निगृ ३,१, १ : २२; हिगृ २, १०, ७; -हीः आग्निगृ २,६,३ : ४७; ५१; बौध २,५, १८[२]†; -हीभ्यः आग्निगृ १, २, २:३२××; बौगृ २,११, ३४[२]†; -ह्यः आपमं २, २०, ७†; -ह्यै शंध ११६ : ७३; विध ६७,२३; ७४,१.

†प्रपितामह-पत्नी- -त्नीभ्यः वैगृ १, ४ : २०; ४,४ : १०.

प्रपितामह-प्रभृति- -तीन् आपश्रौ १,९,४.

प्रपितामहा(ह-आ)दि- -दि आपध १,२,५; हिध १,१,३८.

†प्रपित्व(त्-त्र)[h]- -त्वम् शांश्रौ १४, ४९,३; -त्वे[i] आपमं १,१४,४; अप ४८, ६०; ११७; निघ ३, २९; या ३,२०.

प्र √पिष् > प्र-पिष्ट- -ष्टानाम् काश्रौ ५,१,४.

प्रपिष्ट-तम- -मैः या ६, १२[j].

प्र √पीड् > प्र-पीड्य काश्रौ २४,३, ३६; आपश्रौ.

प्र-पुट[k]- -टे कौसू २५,३०.

प्रपुनाट्- पाउभो २,२,१००.

प्र √पुष्, प्र (पुष्यन्ति) शांश्रौ ९,२४, ९†.

प्र √पू > प्र-पावन- -नः अप ३८,१, ३.

प्र-पुन्वत्- -न्वद्भ्यः[l], -०न्वन्तः[l] आपमं २,१८,३८.

प्र √पूज्, प्रपूजयेत् अप १९[२], ५, ३.

प्र-पूजित- -ते अप ३८,१,२.

प्र √पॄ, प्रपूरयेत् आग्निगृ २,४,७:६.

प्र-पूर्य आग्निगृ २,४,७ : १७.

प्र-पौत्र[c]- -त्रः बौध १,५,९५; -त्राः निसू १०, ९ : २३; गौपि १, ७,९†.

प्र √प्याय्, प्यै, प्रप्यायते या ११, ४२; प्रप्यायस्व[m] हिगृ २,४,३†; †प्रप्याय[m] आपमं २, १३, २; आग्निगृ २, १,४ : १८; भागृ १, २५ : १०.

प्र-पीन,ना- -†नम्[n] माश्रौ ६,२,६, २०; वाश्रौ २, २,५,६; वागृ १, ३१; शुप्रा ३,९०; -†ना आपश्रौ ४,१०,७; माश्रौ; -†नाः आपमं १, १४, ७[o]; अप्रा ३, १,७[p]; -ने आपश्रौ २१, २०,७†.

†प्र-प्यात- -तम्[n] आपश्रौ १६, १२,११; हिश्रौ ११, ५,७.

प्र √प्रुथ् > प्र-प्रोथ[q]- -थयोः[r] वैश्रौ १७, १३ : ५; -थेषु[r] आपश्रौ

a) पाभे. वैप २,३खं. प्र···भाहि तैआ ७,४,३ टि. द्र.। b) °भाहि इति मूको.। c) नाप.। प्रास.। d) पाभे. वैप १,२१३९ b द्र.। e) पाभे. वैप १,२१८२ l द्र.। f) पाभे. पृ १५७३ v द्र.। g) सपा. °हाय<>°हेभ्यः इति पाभे.। h) वैप १,६६२ h द्र.। i) वैप १,२१८२ o द्र.। j) तु. दु. राज.। वैतु. ल. °पिष्ठ° इति। k) =दृढ- पुट-। प्रास.। l) सपा. हिगृ २, ९,२ प्रयुन्व° इति पाभे.। m) परस्परं पाभे.। n) पाभे. वैप १,२१८३ j द्र.। o) पाभे. वैप १,२१८३ f द्र.। p) पाभे. वैप १,२१८३ k द्र.। q) वैप १ द्र.। r) सप्र. आपश्रौ १८, ४, १५ थेषु इति पाभे.।

१८, ४,१५; वाश्रौ ३,१,१,४३; हिश्रौ १३,१,५०; ६१.

प्र√प्लु, प्रप्लावयति बौश्रौ ६, २ : ८; ३ : ७; कौसू ४६, २८; ४८,६; प्रप्लावयन्ति बौश्रौ ८,२० : १६; प्रप्लावयेत् बौश्रौ २९, १३ : १३; प्रप्लावयेयुः बौश्रौ २१,२४ : २४.

प्र-प्लावन- -ने बौश्रौ २१, २४ : २१; २५ : १.

प्र-प्लाव्य बौश्रौ १२, १६:२२; हिश्रौ १०,५,२०; पागृ १,१२,५.

प्र-फर्वि,र्वी[a]- -†र्व्यस् वौगृ १,६,२३; वाध २,३४[b];३५[b]; ग्राशि ५८[b].

†प्रफर्वि-दा- -दाः[c] आपश्रौ १७, ५,१६; वैश्रौ १८,२१ : १७.

†प्रफर्वी-दा- -दाः हिश्रौ ११, ८, १०[c].

प्र√फुल्ल्, प्रफुल्लेते याशि २,६५.

प्र√वघ्, न्घ्, प्रवघ्नाति आपश्रौ २१,१७,१३[d]; कौसू २६, ३२; प्रवघ्नन्ति आपश्रौ १८,४, ४; २१,१८,१[e]; हिश्रौ १६,६,१०[d].

प्र-बद्ध,द्धा- -द्धम् अप ७०[2],१८,१; -द्धस्य अप १, ३२, २; -द्धाम् आपश्रौ १९, ३, ६; -द्धेन अप ७१,३,१.

प्रबद्ध-विलम्ना(न-आ)च (दि-अ)र्थ[f]- -र्थम् पावा ४,१,५२.

प्रबद्धा(द्ध-अ)ङ्गुष्ठ- -ष्ठाभ्याम् कौसू ३५,२७.

प्र-बध्य शांश्रौ ३,१९,९; आपश्रौ.

प्र-बन्ध[g]- -न्धान् हिश्रौ १६,६,२५[e].

प्र-बन्धन- -नम् बौश्रौ १०, २२ : १०; १५.

प्र-बल[h]- -लम् अप ५५,२,३.

प्र√बाध्, प्रबाधते या ३,८.

प्र-बाधित- -ते सु २,२.

प्र-बाधि(न् >)नी- -न्यौ वौगृ ३, ११,१.

प्र-बाहु[i]- -हुषु विध २२,७७.

प्रबाहुक्[a] आपश्रौ १२,१,१२;१३××; बौश्रौ १, १६:८;११; २०, १३: ७;८; भाश्रौ.

प्रबाहुकम्[j] पाग १, १,३७.

†प्र√बुध्, प्रबुध्यताम्[k] आपमं १, ४, ८; आग्निगृ १, ५, २ : ५३; बौगृ; प्रबुध्यस्व कौसू ७७,१३; अप ४६,४,१; ६,५.

(प्र)अभुत्सि अग्र २०,१४२.

प्रबोधयन्ति काश्रौ ९, १, १; प्रबोधयेत् कौसू ७३, १; ७७, १३; विध ७१,५६.

प्र-बुद्ध,द्धा- -द्धः बौध ३, ८, १९; नाशि २, ८, १; -†द्धाय शुप्रा ६, २६; -द्धायाः अप ३५, १, २†; -द्धे विध १,१.

प्रबुद्ध-यजुस्- -जुः बौश्रौ ६, ७ : ५; १९; २१,१० : १०××.

प्र-बुध्[a]- -बुधे बौश्रौ ६,७ : २†.

प्र-बुध्य आपश्रौ १०, १८, २××; भाश्रौ १०, ११,११; वैश्रौ १२, ११ : ५.

प्र-बुध्यत्- -ध्यन् माश्रौ २, १, ३, ११.

प्र-बोद्धव्य- -व्यम् कौशि ७०.

प्र-बोध[l]- -धः आपमं २,१६,१४.

प्र-बोधित- -तः अप ८,१,२; -ताः वैताश्रौ १६,४.

प्र-बोधिन्- पाउभो २,२,२९१.

प्र√बृह्, प्रबृहति बौश्रौ १४,१२ : ४; †प्रबृहन्तु[m] बौश्रौ १४, १२ : ५-७; हिश्रौ ८,२,३८.

प्र-बृहम्[n] काश्रौ २,७,२३[o].

प्र-बृह्य काश्रौ ६, ८, २[n]; हिश्रौ ८, ३,७.

प्र√ब्रू, प्र···ब्रवथ वाधूश्रौ ३,७५:४. प्रब्रूते बौश्रौ ३, २७ : ३२; २४, १ : ३; प्रब्रूषे या ५, ८; †प्रब्रवीमि आश्रौ ६, ११, १६[p]; शांश्रौ १०, १, १३[p]; काश्रौ २, १, १८; २, १; १२, ६, २८[p]; आपश्रौ ३, १८, ४[2]××; २१, ६, १[p]; काश्रौसं; या ७, २३; १०, ४२; ११, ४३; †प्रब्रूमः आपश्रौ १०, २५, १; बौश्रौ ६, ५ : ३०; भाश्रौ; या ८, १९; †प्रब्रूहि शांश्रौ १५, १७, १[q]: काश्रौ ७, ८,१३; कौसू; †प्र··· ब्रूहि आपश्रौ १, १३,३; भाश्रौ १, १३, ६; हिश्रौ १, ३, ३८; †प्रब्रूतात् शांश्रौ १७, १४, ४; काश्रौ; आपश्रौ २१, ५, १६[p]; †प्र···ब्रूतात्[r] आपश्रौ १,१०,

---

*a*) वैप १ द्र.। *b*) पाभे. वैप १,२१८३ t द्र.। *c*) पाभे. वैप १, २१८३ s द्र.। *d*) सपा. °घ्नाति <> °घ्नन्ति इति पाभे.। *e*) सपा. प्रबध्नन्ति <> प्रबन्धान् इति पाभे.। *f*) प्रबृ° इति मूको.। *g*) उप. कर्मणि घञ् प्र.। *h*) वस.। *i*) नाप.। प्रास.। *j*) =प्रबाहुक्। *k*) सपा. वैप १ विबुध्यताम् खि २,११, २ टि. द्र.। *l*) व्यप. (ऋषि-)। उप. कर्तरि अच् प्र.। *m*) सपा. तै ३, ३,३,१ प्रबृहन्तु इति पाभे.। वैप १,२२१० p अपि द्र.। *n*) धा. उद्यमने वृत्तिः। *o*) प्रबृहन् इति चौसं.। पाभे. वैप२, ३खं माश १,३,३,१० प्रवर्हम् टि. द्र.। *p*) सप्र. प्रब्रवीमि <> प्रब्रूतात् इति पाभे.। *q*) पाभे. वैप २,३खं. आचक्ष्व ऐत्रा ७,१३ टि. द्र.। *r*) पाभे. वैप १,२१८५ c द्र.।

६; बौश्रौ; †प्र···ब्रूत आपश्रौ २४,१३,३; बौश्रौ ३,२८ : ११; हिश्रौ २१,१,२; २,२४; †प्रब्रवाम,>मा आपश्रौ ५, १७, ४; हिश्रौ ३, ४, ४८; आपमं २,५, १९[a]; आग्निगृ; †प्राब्रवीत् वाधूश्रौ ४, १०८ : २२; २४; ऋअ २,१,१९१; प्राब्रुवन् लाश्रौ ८, ४, ६†; †प्रब्रुवीत आगृ ३, १०,१; गोगृ १, ४, २८; †प्रब्रूयात् आश्रौ ८, १४, १; काश्रौ १२,३,१९; आपश्रौ; प्रब्रूयाताम् बौश्रौ १७,४ : १३†; प्रब्रुवीरन् निसू ६, ११ : २५†; †प्रब्रूयुः बौश्रौ १६, ४ : ११; वैश्रौ १८, १ : ५४; लाश्रौ ८, ३,१२; १३; पागृ.

प्र-ब्रुवत्- -वन् निसू ४,८ : २१.

†प्र-ब्रुवाण- -णः आगृ ३, १०, ९; आपध १, २९, १०; हिध १,७, ५७; याश्,४;१०,२२;प्र(ब्रुवाणः) साअ १,५२४; २, ४६६.

प्र√भज् > प्र-भाग- -गः काश्रौ ६,७,९.

प्रभाग-पाद[b]- -दः या २,७.

प्रभागपाद-सामान्य- -न्यात् या २,७.

प्र√भञ्ज्, प्रभज्येत् मागृ २,१५,६[c]. प्रभज्यन्ते[d] अप ७१, १०, १; प्रभज्येत अप ३७,२०,१†.

प्र-भग्न- -ग्नम् निसू ६,१० : २१†.

प्र-भञ्जन- -नेन कौसू १३५,९†.

प्र-भर्वी[e]- -र्व्यम् आपमं १,१०,१†[f].

प्र√भस्[g], †प्र···भसत् बौश्रौ ३,३ : ३; ऋप्रा ५,१८.

प्र√भा, †प्र···भाति[h] आग्निगृ ३, ६, १ : २०; बौपि १, ८ : १७; †प्र(भाति)[h] हिपि ७:१०; भाशि १२१; प्रभाहि आपश्रौ ५,२,४†.

प्र-भा- -भया विध १,२८†; -भा विध ९९,४; -भानाम् अप ६४, ३,६; -†भाम् अप २४,२,३; ६९,८,२; बृदे ६,१२६.

†प्रभा(भा-अ)न्वित- -ताः अप ५२, ६, ३; -तानि अप ५२, ११,१.

प्रभा-युत- -ताः विध १,२७†.

†प्र-भात[i]- -ते वैश्रौ १,१० : ७;९, १२ : ५; वैगृ ४,११ : १०; अप ३१, ६, १; वाध ४,२६; शंध.

प्रभातिक[j]- -के अप ६८, २, ५९†.

प्र-भा(त् >)न्ती- -न्त्याम् शांश्रौ २,६,३†.

प्र-भाव-, °वयत्- प्र√भू द्र.

प्र√भाष्, प्रभाषन्ते अप ६४,१०,२.

प्र-भाष्य वैश्रौ २०,५ : २.

प्र-भास[k]- -सः अप ४३,५, ८; ५२, ५,२; १०,१; -सम् शंध ११६ : ६३; -से विध ८५,२६[l].

†प्र√भिद्, प्र···भिन्दन्ति बौश्रौ १५, १ : ३; †प्र···भिन्दत बौश्रौ ६,२३ : ६.

†प्र-भिन्दत्- -न्दन् आश्रौ ८, १४, ४; बौश्रौ ६,३० : २४.

प्र-भिन्न- -न्नम् आपश्रौ ५, १, ७; -न्नौ सु १४,१.

प्र-भु- प्र√भू द्र.

प्र√भुज् (कौटिल्ये) > प्र-भुज्य काठश्रौ १५६; माश्रौ १,२, ५, ११; वाश्रौ.

प्र√भू[m], प्रभवते अप २, १, २; प्रभवति काश्रौ २५, ५, २१; आपश्रौ ९,१६, १२; भाश्रौ; पा ४,३, ८३; ५, १, १०१; प्र··· भवति वाधूश्रौ ४,११८ : ४†; प्रभवतः वाध १५,२; प्रभवन्ति लाश्रौ १०,६,१३; शंध ३७३; आपध १,२३,२; हिध १,६,१०; प्रभवेत् आपश्रौ ९, १५, ९; हिश्रौ १०,७,३; १५,४,२९.

†प्रभूयासम्[n] बौश्रौ ३,२० : ४; भाश्रौ ४,१९,५; वाश्रौ १,१,४, ९; प्र (भूयासम्) आपश्रौ ६,६, ८†; †प्र···भूत् बौश्रौ १७, ५० : ११; २८,२ : ३४.

प्रभावय काश्रौ १०, ६, २१; बौश्रौ ७,१८-१९:१××; वैश्रौ.

प्र-भव- -वः आश्रौ ८, १३, ३१; पा १, ४, ३१[o]; -वम् बृदे १, ६१[o];-वाय बौश्रौ १६,३५ : १.

प्रभव्य[p]- -व्यम् लाश्रौ १०,१९, ९.

प्र-भवत्- -वत्सु सु ९,२.

प्र-भविष्णु- -ष्णु विध ९७,१९.

प्र-भाव[q]- -वः आज्यो ६, २०;

---

a) पाभे. वैप १, २१८५ d द्र. । b) षस. पूप. =कार्षापण- । c) तु. Knauer । बसं. प्रभजेत् इति ? । d) कर्मकर्तरि रूपम् । e) =प्रफर्वी- (वैप१ द्र.) । इह<प्र√भर्व् इति विशेषः । f) पाभे. वैप १,२१८३ t द्र. । g) वैप १ द्र. । h) पाभे. वैप १,२१८५ o द्र. । i) =प्रातः-काल- । j) विप. । तात्रभविकष् ठन् प्र. उसं. । k) =वसु-विशेष- । व्यु. ? । l) =तीर्थ-विशेष- । m) या २,७;३,१३ परामृष्टः द्र. । n) पाभे. वैप १,२१२२ p द्र. । o) =उत्पत्ति-स्थान- । अपादाने कृत् । p) विप. । तात्रभविकः यत् प्र. । q) प्रास. इति पाका. प्रमृ. [३,३,२४] ।

–वम् अप ६९, १, ५; –वस्य बृदे ४,८२; –वात् बृदे १,३४; ८,३४.
प्र-भावयत्– -यन् काश्रौ १०, ६, १४;–यन्तः काश्रौ २५,१२,२५.
प्र-भु[a]- पा ३,२,१८०; –भवः हिश्रौ १६, ८, १४; –भु वाधूश्रौ ३, ८३ : १०; ४,७४ : २९; –भुः आपश्रौ १२, १२, १३†; हिश्रौ ८,३, ४२†; अप्राय; या १४, ११; –भुम् शंध ११६ : ५७[b]; आपध १,२२, ६; विध १,५८; हिध १, ६, ६; या १४, ३०; –भूणि हिगृ १,२५,१†; –०भो अप ४,२, १०××; बृदे ६, ५४; –भोः ऋप्रा ५, ३९†; –भौ पा ७,२,२१.
†प्रभ्वी[a?c]– -भ्वी आपश्रौ ५, १५, २; बौश्रौ २, १८ : ९; हिश्रौ ६,५,१५.
प्रभु-ता– -ता मीसू १०,३,८.
प्रभु-त्व– त्वम् बृदे २, ६; ७, ६०; –त्वात् मीसू ६,६,२७××.
†प्रभु-मत्– -मतः आपश्रौ १३, १२, २; बौश्रौ ८, १२ : १६; वैश्रौ १६,१३ : १५; हिश्रौ ९, ३,४९; –मते बौश्रौ ९, १० : ११.
प्र(भु>)भू-वसु[d]– -सुः ऋअ २, ५,३५; ९,३५; साअ १,४९०.
प्र-भू[a]– -भुवः पागृ २, १७,१५[e]; –†भूः आपश्रौ ६, १८,२; २०, ५,९;११,१; बौश्रौ.
प्रभू-त्व– -त्वात् काश्रौ ८, ८, २९; ९,५,५; २२,१,३९.
प्र-भूत,ता– पाग ५,२, ६२; पावाग ४, ४, १; –तः माश्रौ ८, १२, १६; या १४,२९; –†तम् शांश्रौ ८,२१,३; आपश्रौ १९, ६, ९; बौश्रौ; –ताः वैश्रौ १३,७ : २१; –तान् आपश्रौ १५,५,२०; १९, १, ५; माश्रौ; –तानाम् विध २३, ३१; –तानि भाश्रौ ११, ५,१५; –ताम् वैश्रौ ६, ११ : २; बृदे ७, ६०; –तेन आपश्रौ ५,५,९××; बौश्रौ; –तेषु माश्रौ ६,१,३,२२.
प्राभूतिक– पावा ४,४,१.
प्रभूतक– पा ५,२,६२.
प्रभूत-काम– -मानाम् चाअ ३० : ९.
प्रभूत-बल-वर्धन– -नम् अप ७,१,३.
?प्रभूतमृष्टतस्[f](:) अप ४४,३, १०.
प्रभूत–यवसे(स-इ)न्धनो (न-उ) दका (क—अ) विच्छिन्न-सांपरायिक[g]– -कः शंध २५३.
प्रभूत–लम्ब-केश– -शः अप ६९,२,१.
प्रभूता(त-अ)र्थ– -र्थम् नाशि १, २,१.
प्रभूतै(त–ए)धो(ध-उ)दक– -के आपध १,१५,२२; हिध १,४, ८१.
प्रभूतै(त–ए) धो (ध-उ)दक-यवस-कुश-माल्यो( ल्य-उ )पनिष्क्रमण[h]– -णम् गौध ९,६५[1].
प्रभूतै(त–ए)धो(ध-उ)दक-यवस-समित्-कुश-माल्यो(ल्य-उ)पनिष्क्रमण[h]– -णम् बौध २, ३, ५१[1].
१प्र-भूति– -?ति अप ७०[3], ११, २४; –त्यै बौगृ २, ८, २८†.
?प्रभूतगभीतवसति या १४,३१.
२प्र-भूति[j]– -†तिः आपश्रौ ५,१५,२; बौश्रौ २,१८ : ९; हिश्रौ ६, ५: १५.
प्र√भृ(=√हृ[वधा.]), †प्रभरे ऋअ १९,४२?[k]; या ९,१०;[l]†प्र(भरे) आश्रौ ४,१३,७[2]; शांश्रौ; आपश्रौ ५,५,८[1]; बौश्रौ २,१४:५[1];भाश्रौ ५, ३,९[1]; माश्रौ १,५,१,१६[1]; वाश्रौ १, ४,१,६[1]; वैश्रौ १,५: १३[1]; हिश्रौ ३, २, ४४[1]; प्रभरामि वागृ ५, २८[2]†; †प्र(भरामहे) शांश्रौ १०, ११, ८; साअ २,९४६; प्र···भरस्व शांश्रौ १२, १४, १†; †प्र(भरस्व) शांश्रौ १२,१०,१२; ऋअ २, ७, ८८; †प्रभर,>रा वैताश्रौ १६,१; या ६,२०∮; †प्र(भर,>रा) शांश्रौ १४, ३, ८; ऋअ २, ९, १०३; †प्र···भरध्वम् आश्रौ ३, ७,५; ७,११,३४; शांश्रौ;†प्र(भरध्वम्) आश्रौ २, १६, ११ ; शांश्रौ; †प्र···भरत, > ता आश्रौ ३, ३, १; १८, १५××; आपश्रौ; †प्र(भरत,>ता) आश्रौ २,१६, ७;१७, ३; शांश्रौ; चाअ४१,१२; (प्र)भरता तैप्रा ३,११; प्रो(प्र-उ [भरत>ता])शांश्रौ १२, ३,१०;

a) वैप १ द्र.। b) =साध्य-विशेष-। c) नाप. (अग्नि-तनू-)। d) =ऋषि-विशेष-। वस.। e) =(उपचारात्) देवता-। f) पाठः? । °तमुष्टितः इति संस्कर्तुः टि.। g) कस. >द्वस.> बस.>कस.। h). वस.>द्वस.। उपनिष्क्रमण- =विहार-स्थल-। i) परस्परं पामे.। j) नाप. (अग्नितनू-)। वस.। k) वैप १, २१८७ g द्र.। l) वैप १,२१८७ i द्र.।

ऋअ २, ८, ६२; †प्रभरेम[a] आग्निगृ ३, ८,२:४३; बौपि १, १५:५०; हिपि १५:१८.

†प्र-भृत— -तम्[b] आपश्रौ ९, १०, १७; बौश्रौ १४,२५:४; भाश्रौ ९,१४, ९; वैश्रौ २०, २०:२; हिश्रौ १५, ३, २७; –तस्य या ११,४९.

प्र-भृति— -तयः निसू ९, ९:४७; –ति[c] बौश्रौ १९,६:८-१०××; माश्रौ; –तिः शांगृ २, ७, २६[d]; –तिभिः भाश्रौ ११, २१, ४; -तिम् क्षुसू १, ६१३; –तीः[e] आपश्रौ १५, २०, ४; बौश्रौ ९, १९:२६; भागृ ३, ६:१०; ७:६.

°प्रभृति— -तयः पावा १,३,१०; ५,२,९४; –तिः अअ ८, १०; १५, १४; –तिभ्यः पा २, ४, ७२; –तिषु अपं १:१३; –तीन् अअभू ८; –तीनाम् पावा १, ४,५२; ७,४,८२; –तीनि अप्रा ३,१,१४.

प्र-भृथ[f]— फि ७; –थस्य या ११, ४९†.

?प्रभोजनाद्यरञ्जी सुध २३.

प्र√भ्रंश्, प्रप्र···भ्रंशेरन्[g] काश्रौ २३, १,१९; आपश्रौ २२, १३, १९; वैश्रौ १७,५:४; हिश्रौ १७, ५, ३८.

प्र-भ्रंशुक— -काः हिश्रौ २१, २, ५३†.

प्र-भ्रष्ट— -ष्टैः अप ७०[2],१४,२.

प्रभ्रष्ट-ग्रह-नक्षत्र— -त्रैः अप ७०[2],१५,१.

प्र√भ्राज् > †प्र-भ्राज्— -भ्राट् आपश्रौ १६, ३०, १; वैश्रौ १८, २०:४१; हिश्रौ ११,८,४.

†प्र-भ्राजमान,ना[h]— -नाः बौश्रौ १९, १०:२४; –नाम् अप ४६,६,३; –नानाम् बौश्रौ १९, १०:४१.

†प्रभ्राजमानी— -नीनाम् बौश्रौ १९, १०:४२; –न्यः बौश्रौ १९,१०:२४.

प्रमंहिष्ठीय[i]— -यम् शांश्रौ १२, २५, ४; लाश्रौ ६,११,४; क्षुसू २,१५:२३; निसू ७, १२:१९; –ये निसू ३,१२:१.

प्रमंहिष्ठीय-वत्— -वन्ति निसू ६, ४:१.

प्रमगन्द[f]— -न्दः, -†न्दस्य या ६, ३२∲.

†प्र-मति[f]— -तिः बौश्रौ १७,४०:२; द्राश्रौ ७, २, ७; लाश्रौ; –तिम् आश्रौ १,६,१; ३,७,१३.

प्र-मत्य प्र√मन् द्र.

प्र√मथ्,न्थ्, प्रमथन्तु वौगृ ३, ७, १९†[j].

प्रमन्थन्तु आग्निगृ २, ५, ३:२६†[j].

प्रममाथ बौश्रौ १८, ४५:६;

प्रमथिष्टन अप्राय १,४.

प्र-मथ्य वाध १,३४.

प्रमथ्य-हरण— -णानि आज्यो ४, १२,

प्र-मथ्य— -थ्यः कप्र १,७,७.

प्र-मन्थ[k]— -न्थः कप्र १,७,५; १३; अप २२, ७, १; –न्थम् वैश्रौ १,१:२७; १०,१०:६.

प्रमन्था(न्थ-अ)ग्र— -ग्रम् कप्र १, ८,२.

प्र-मन्थन— -नम् बौश्रौ २७,८:७.

प्र-माथम् बौश्रौ १८, २४:१६; ४५:५.

प्र-माथिन्— पा ३,२,१४५.

प्र√मद्,न्द्, प्रमाद्यते सु २२, १[2]

प्रमाद्यति वाधूश्रौ ४, ३४:५;

प्रमाद्येत् बौश्रौ २४, २३:७; वाधूश्रौ ४,३४:४.

प्रममाद आपश्रौ १, ९, ९†;

प्रमदः जैगृ १,२:१७†.

प्रमन्दयते बौश्रौ १२, २०:२;

प्रमन्दयति बौश्रौ १८, १९:५;

प्र-मत्त,त्ता— -त्तः आपश्रौ ३, १८, ८; १४, ८, ४; भाश्रौ; –त्तम् अप २,६,२; ३०[2],२,७; –त्तस्य या ३,२; –त्ताः बौश्रौ ९, १७:१४; वैश्रौ ७, ११:९†; हिश्रौ २, ६, ७†[l]; –त्तानाम् आगृ १, ६, ७; अप्राय २, ५†; –त्ताम् वैगृ ३, १:१०; बौध १, ११, ९.

प्रमत्त-रज्जु[m]— -ज्जुम् कौसू ३८, २६.

प्रमत्तो(त्त-उ)क्त— -क्ते गौध १३, ११.

प्र-मद,दा[n]— पा ३, ३, ६८; –दम् वाधूश्रौ ४,३४:९; –दान् अप

*a*) पाभे. वैप १, २१८७ k द्र.। *b*) पाभे. वैप २,३खं. प्रभृतम् तैब्रा १,४,४,१० टि. द्र.। *c*) वा. क्रिवि.। *d*) पाभे. पृ १६४६ l द्र.। *e*) =आद्य-यजुस्-। *f*) वैप १ द्र.। *g*) विशेषः वैप २,३खं. तैब्रा २,७,१४,३ टि. द्र.। *h*) विप., नाप. (रुद्र-, रुद्राणी-)। *i*) वैप २,३खं. द्र.। *j*) परस्परं पाभे.। *k*) =मन्थन-दण्ड-। उप. करणे घञ् प्र.। *l*) उत्तरेण संधिरार्षः। *m*) = चाक्रिक-रज्जु- इति केशवः ¹[LII])। पूप. अर्थः?। *n*) उप. भावे कर्तरि च प्र.।

५३,३,१; –दे वाधूश्रौ ४, ३४ : ४.
प्र-मदक– -कः या ६,३२ॐ.
प्र-मदन[a]– -नम् कौसू ७८,९[b]; –ने माग्र १,९,२८[c,d].
प्र-मन्द[e]–>प्रमन्दो(न्द-उ)शीर-शलल्यु(ली-उ)पधान-शकधूम[f]– -माः कौसू ८,१७.
प्र-माद– -दः वृदे १, ५६; –दम् आग्निगृ २, ६, ७ : ३९; –दात् आग्निगृ २, ६, ५ : ४; ७, ६ : १६; काग्रउ; –दे वैगृ २, १५ : ११; आपध २,२८,८; हिध २, ६,८; –देषु वौध ४,३,१;४,१.
प्रमाद-तस् (:) अप ३७, ४, १××; शंध ३९५; वौध २, २, ६८.
प्रमादां(द-अ)पह्नव– -वौ वृदे १, ३८.
प्रमादिक– -कम् कप्र ३,८,१६.
†प्र√मन्, प्रमन्महे शुअ ४, ११; प्र(मन्महे) ऋअ २,१,६२.
प्र-मत्य पावा ६,४,३७.
प्र-मर्दन– प्र√मृद् द्र.
प्र√मा (माने)[g], प्रमिमीत हिश्रौ ३, ३,१३†.
प्र-मा[h]– -†मया आपश्रौ ४,५,४;९, १३,६; माश्रौ;–मा आपश्रौ१५, ८,२××; बौश्रौ; ऋप्रा १७,१९.
प्र-माण[a]– -णम् आपश्रौ २४, १, ३०; बौश्रौ २, ३ : ७; वौश्रौप्र ५४ : ८; माश्रौ; काशु १,१२[i]; २, १४[i]; आशु ३,७[j]; हिशु १, ४६[i]; –णात् काशु १, २३; बौशु १ : १७; २८; मैत्र ३०; –णानि बौश्रौ २७, ४ : २८; भाश्रौ ७, २, ६; अप २३, ६, ४; ४६, १,८; –णे बौश्रौ २०, १६:१२; काशु १,२४; पा ३, ४,५१[k]; ४,१,२४××; पावा ५, २, ३७; –णेन बौश्रौ २७, ४ : ३०; भाश्रौ; –णेषु काश्रौ १८, १,५××.
प्रामाण्य– -ण्यम् या १४,६.
प्रमाण-तस् (:) कप्र ३, ८, १२; अप २३,२,३××.
प्रमाण-परिमाण– -णाभ्याम् पावा ५,२,३७.
प्रमाण-मा(त्र>)त्री[l]– -त्रीम् आपशु १, ११; हिशु १, २१.
प्रमाण-वर्जित– -ते वैगृ ६,१ : ७.
प्रमाण-विभाग– -गः काशु २, १६.
प्रमाणा(ण-अ)र्थ– -र्थम् लाश्रौ ६,१,११.
प्रमाणा(ण-अ)र्द्ध– -र्द्धम् काशु १,१४; –र्द्धे काशु १,१६.
प्रमाणित– -तम् अपं ३ : ३.
प्र-माय शांश्रौ १७, १०, ४; बौश्रौ; कौगृ १,४,१[m].
प्र-मित– -तम् काश्रौ २२,८,१६.
प्र-मेय– -यम् काशु ७, १९; वेज्यो २४.
प्र-मातामह[n]– -हाय शंध ११६:७३.
प्रमातामही– -ह्यै शंध ११६ : ७४.
प्र-माथम्, °थिन्– प्र√मथ् द्र.
प्र-मापण–,°माप्य,°मायुक– प्र√मि, मी द्र.
प्र-मार– प्र√मृ,मृ द्र.
प्र-मार्जन–, °मार्ज्य प्र√मृज् द्र.
प्र√मि (प्रक्षेपणे)> प्र-मित्– -मितः भाग्र १,२७ : ११†.
प्र√मि,मी, प्रमीयते बौश्रौ १४, ६ : ११; १८××; वाधूश्रौ; प्रमीयन्ते बौश्रौ १३,४ : ७; आग्निगृ २,५, ९ : १२; जैगृ २, ६ : ९; वृदे ४, १२०; प्रमीयातै आपमं १,८,५; प्रमीयेत आश्रौ ३,१०, १०; १८; शांश्रौ; प्र···मीयेत भाश्रौ ११, १८, ११; प्रमीयेरन् आपश्रौ ९,३,१७; बौश्रौ.
प्रा(<प्र)···मिनोति[o] आपश्रौ १४,२९,३; हिश्रौ १५,७,१६.
प्रमिनाति, प्रमिनन्ति अप्रा ३, १,७†; प्र(मिनन्ति) आश्रौ ८, ९, २†; †प्रमिनाम आश्रौ ३, १३, १२; आपश्रौ १४, २८, ४××; बौश्रौ.
प्रमिनीत् अप्रा ३,१,७†.
प्र(मिमय) शैशि १८४†.
†प्रमायि बौश्रौ ३,६:१४; काग्र २८,४; प्रमेष्महि आपश्रौ ६, २१,१†.
प्रामापयत् या ५, ९; प्रमापयेत् वाध २०,४१.
प्र-मापण– -णे शंध ४०९; विध

*a*) उप. भावादौ प्र. । *b*) =फलमोदकादि- इति केशवः। *c*) =कर्म-विशेष- (तु. पाभे.)। *d*) सप्र. प्रमदने<>प्रवदने इति पाभे.। *e*) =ओषधि-विशेष-। *f*) द्वस.। शल्ली- =श्वावित्-शलाका-, उपधान- =उपानह्-, शकधूम- =ब्राह्मण- इति दारिलः। *g*) या १०, २१ परामृष्टः द्र.। *h*) भाप., नाप. (छन्दो-विशेष-)। *i*) =प्रमाण-रज्जु-। *j*) =प्रक्रमादि-। *k*) =आयाम-। *l*) पूप. =आयाम-। *m*) सपा. शांगृ १, ८, १४ मापयित्वा इति पाभे.। *n*) प्रास.। *o*) पाभे. वैप १,२१९० c द्र.।

५०,४६.
प्र-माप्य शंध ३८२; ४०९.
प्र-मायुक- -कः आपश्रौ २,१४, २; १२,१३,१०××; बौश्रौ; या ३, ५†; -काः बौश्रौ १४, ९ : २; ३; आगृ २,७,११; -कान् गोगृ ४,७,२१.
†प्र-मिये[a] आश्रौ ४, ११, ६; शांश्रौ ९,२६,३; १६,१,२१.
प्र-मीत- -तः आपश्रौ ९, ११, २२; हिश्रौ १५, ३, ३७; हिपि २३ : १८; -तम् आपश्रौ ९,११,१७; वैश्रौ; -तयोः बौपि २, ४, ७; -तस्य आश्रौ ३, १०, १७; आपश्रौ; -ताः हिपि २० : ८; -तानाम् आग्निगृ ३, ७,४ : ५; बौपि; -ते भागृ ३,१ : ४; हिपि २३ : १०.
प्रमीता(त-अ)हन्- -हनि कप्र ३,५,७.
प्र√मिह्>प्र-मेह[b]->प्रमेहिन्- -ही शंध ३७८.
प्र-मेहण[c]- -णम् कौसू २५,१०.
प्रमीप- (>प्रमीपिन्-) प्रतीप- टि. द्र.
प्र-मुख[d]- -खाः अप्राय ६,७.
प्रमुख-तस्(:) वैगृ ५,१५ : २.
प्र√मुच्,ञ्च्, †प्रमुमोक्तु आपश्रौ ७, १७, ५; बौश्रौ ४, ६ : ३९××; भाश्रौ; †प्रमुमुग्धि बौश्रौ ८, १९ : १६[e]; आपमं १, ४, १४; आग्निगृ १,५,४ : ९; अप्राय४,१. प्रमुञ्चति आश्रौ ९,३,१२; काश्रौ; †प्र…मुञ्चामि[f] आश्रौ १, ११, ३××; शांश्रौ; †प्र…मुञ्चाति आपमं १,४,५; ५, ७; बौगृ १, ४, १८; प्र…मुञ्चातु आगृ १, ७,१३[3]; कौगृ १, ११, ४[3]; शांगृ १, १८, ३[3]; कागृ; †प्रमुञ्चतु आश्रौ २, ७, ११; शांश्रौ; प्र…मुञ्चन्तु आपमं १,७, ९[g]; बौगृ १,५,५[g]; ४, २,१२[g]; अप ४२,२,३; प्रमुञ्च>ञ्चा अप २०, ७,८; तैप्रा ३,८†; प्र…मुञ्चतम् ऋप्रा ५, ५९†; प्रामुञ्चत् शांश्रौ १४,७,१.
प्रमुमुचतुः या ५, २१; प्रमोचिरे बृदे ६,१५.
प्रमुच्यते सु ३१,६; कप्र २,१०, ८; अप; प्रमुच्येते बौध ४,६,६; प्रमुच्यन्ते वाध २५,३; प्रमुच्येत याशि १,३२; प्रमुच्येय>या सु ११,५.
प्रमोचयेत् कप्र २,८,२२.
प्र-मुक्त- -क्तः आपध १, ९,१३; हिध १, ५, ११७; -क्तयोः वैताश्रौ ९,२१.
प्रमुक्त-त्व- -त्वात् कौसू १,८.
प्र-मुक्ति[h]- -क्तीः आपश्रौ २०,१२, ४.
प्र-मुच्य काश्रौ १६,३,१४; काठश्रौ.
प्र-मुच्यमान- -नः वैताश्रौ १०, १७; -नम् बौश्रौ ४, ६ : ३८; वैताश्रौ १०, १६; -नान् बौश्रौ ११, ४ : २२; १५, २९ : १८; -ने आपश्रौ ७, १५, ६; -नेषु वाश्रौ १,६,५,७.
प्रमुच्यमान-होम- -मान् वैताश्रौ १०,१७.
†प्र-मुञ्चमान- -नाः[i] आपश्रौ ७, १५, ६; बौश्रौ ४, ६ : २५; माश्रौ १,८,३,३.
प्र-मोचयत्- -यन् विध ५,१९५.
प्र-मोचि(न्>)नी- -नी शंध ४५४.
प्र√मुद्, प्रमोदते अप १,४९,८.
प्र-मुदित- -तः †वाश्रौ ३,२,७,४५; ८,३; सु १४,१; अप २४,३,३.
प्र-मोद[a]- -दः आग्निगृ १,५,१:९†; अप २०, ७, ८; ६८, ५, १३; -दाय हिपि १२ : ३†.
प्र-मोदिन्- -दिनाम् अप ३१, १०,५.
प्र√मुष्, †प्रमोषीः बौश्रौ १७, ४० : ९; वाश्रौ २, २, ५, ७; आपमं.
प्र√मू (गतौ), प्रमुमूतु अप १,४१,४; ?प्रमुमोत[j] अशां ११,४.
प्र√मृ,मॄ, †प्रमृणीहि आग्निगृ १,१, २ : २४; ५,३ : १७; कागृ.
†प्र-मार- -रेण अअ ११,८.
प्र-मृग- पाग २,१,१७.
प्र-मृचु[k]- -चुः अप ५२,९,५.
प्र√मृज्, प्रमार्ष्टि काश्रौ १७,३,१३; आपश्रौ; प्रमृजीत पागृ २, ७, १६; प्रमृज्यात् वाध ११, २२; विध ६२,७.
प्रमार्क्ष्यते पागृ २,६,१७[l].
प्र-मार्जन- -नम् सुधप ८७ : १२.
प्र-मार्ज्य वैगृ ४,४ : ७; ५, ३ : ८; शंध ४३९.
प्र-मृज्य काश्रौ ९, ४, ३८; आपश्रौ २, ११, १; १५, १०,६; भाश्रौ.
प्र-मृष्ट- -ष्टम् काश्रौ ७,५,१५.

a) वैप १ द्र. । b) =रोग-विशेष- । c) नाप. (⌊मेहन-साधन-⌋ ओषधि-) । d) प्रास. । e) पाभे. वैप १, २१९१ c द्र. । f) पाभे. वैप १, २१९१ h द्र. । g) पाभे. वैप १,१८९४ a द्र. । h) =आहुति-विशेष- । i) पाभे. वैप १, २१९१ o द्र. । j) पाठः? प्रमुमूतु इति शोधः (तु. अप.; संस्कर्तुः टि. प्रमुमोच इति शोधः?) । k) व्यप. । व्यु.? । l) सपा. आपमं २,७,१९ प्रवेक्ष्यति इति पाभे. ।

प्र√मृण >?प्र-सृ( ण > )णा-
-णाभिः बौश्रौ २८,१ : १२†[a].
प्र√मृद् >प्र-मर्दन- -ने अप ४०, २,८.
प्र-मृदित- -तेषु बौश्रौ २६,३२:१.
प्र√मृश् >†प्र-मृशत्- -शतः आपमं २, १३, १२; आग्निगृ २,१,३ : २०; भागृ १, २३:१३; हिगृ २, ३,७.
प्र√मृष्, प्रमृष्यते या ४,१४.
†प्र-मृषे[b] माश्रौ ३, ८, १; अप्राय ६,२; या ४,१४∮.
प्र-मृष्ट- प्र√मृज् द्र.
प्र-मेय- प्र√मा द्र.
प्र-मेह-, °हण-, °हिन्- प्र√मिह् द्र.
प्र-मोचयत्- प्रमृ. प्र√मुच् द्र.
प्र-मोद- प्रमृ. प्र√मुद् द्र.
प्र√म्लै >प्र-म्लाय वैश्रौ १२,७ : ४; १६,२२ : १.
प्र-यक्ष[b]- >प्रयक्ष-तम- -†मम् आश्रौ ४,७,४; शांश्रौ ५,१०,८.
प्र√यच्छ्,यम्, प्रयच्छते सु १८, १; प्रयच्छति आश्रौ १,१०, २; ५,१२,६; शांश्रौ; पा, पावा ४, ४,३०; †प्र···यच्छति बौश्रौ १०, ५ : १४; तैप्रा ७, १६; प्रयच्छतः काश्रौ १४,४, १५; बौश्रौ ६, ७ : १४; प्रयच्छन्ति काश्रौ २६, ६, २४; बौश्रौ; †प्र···यच्छन्ति माश्रौ ६,४, ४[c]; अप्रा १,१,१४; प्रयच्छामि आश्रौ ३,१, १६; शांश्रौ ५,१५, ८; काश्रौ; आपश्रौ २२, २६,२[d]; बौश्रौ १८[d],९:४; ११;१८; २५; हिश्रौ २३, ४,१८[d]; कौसू[e] ५६, २; ५७, ४; †प्र···यच्छामि कौगृ १, १६,७[f]; शांगृ १,२४, ४[f]; प्रयच्छत् भागृ १, १३ : ५†; †प्रयच्छतु शांश्रौ ४, १८, २; शांगृ २, १०, ४; वागृ; प्र(यच्छतु) शुअ १,५८३†; प्र··· यच्छन्तु हिश्रौ ६,६,१६†[g]; प्रयच्छस्व अप४,३,२;†प्रयच्छ बौश्रौ ६,३१ : २०; जैगृ १,१२: २१; कौसू १,२४××; प्र···यच्छ हिश्रौ २, ८, ४२†; प्रयच्छतात् बौश्रौ १२,१२ : १६; †प्रयच्छत बौश्रौ ६, २१ : २३; २२ : ४××; विध २०,३३; ३४; प्र···यच्छत बौश्रौ ६,३० : १; प्रायच्छत् शांश्रौ १४, ५०-५१, १; बौश्रौ १४, १६ : १०†××; भाश्रौ; या १२, ८†; प्रायच्छताम् वाधूश्रौ ४,१९:४४; प्रायच्छन् वाधूश्रौ ३, २१:६; अप १[२],१,१; या १३, १२; प्रयच्छेत् आश्रौ २, ४, १६××; शांश्रौ.
†प्रयंधि आगृ १,१५, ३; पागृ १,१८,४; या ६,७.
प्र-यच्छत्- -च्छन् काश्रौ ६, ४,११; ७,८,२०××; आपश्रौ.
प्र-यत,ता- -तः आग्निगृ २,४,११ : ४; कप्र १, ८,३; अप; -†तम् आश्रौ २, १४, ३१; शांश्रौ १, १७, १९; आपश्रौ ३, ११, २[g]; भाश्रौ; -ता भागृ ३, १२: ९; -ताः वैश्रौ २०,२३ : ४;हिपि; -तान् वैगृ ६७ : १२; -ताभिः हिपि १७ : १६†; -ताम् बौश्रौ १३,३२ : ८†; -तैः अप ७०[२], ३, ५.
प्रायत्य[h]- -त्यम् वाध ३, ५६; बौध १, ५,५८.
प्रायत्य-ब्रह्मचर्य-काल-चर्या[i]- -र्यया आपध १, ३१, १९[j]; हिध १,८,३८.
प्रयत-पाणि[k]- -णिः सु १९, ६; वैगृ २,२,१०†.
प्रयत-वस्त्र,स्त्रा[k]- -स्त्रः भागृ २, ३२ : ३; हिगृ १, १४, २; १७, ६; -स्त्राम् आग्निगृ २, १,१ : ७;२:८; भागृ १, २०:१०; हिगृ.
प्रयता(त-अ)ञ्जलि[k]- -लिः बौध २, १,३४; ४,२,११.
प्रयता(त-आ)त्मन्[k]- -त्मनाम् वाध २६, १४; -त्मा अप ६८, ३, ७.
†प्र-यति[b]- -तिः काश्रौ १९, ५, १०; आपश्रौ १९,१०,२; वाश्रौ; -ती या ६,९∮.
प्र-यन्तृ- -०न्तः ऋप्रा १,१०२†.
प्र-यमण[l]- -णम् आग्निगृ २, ६,२ : १४; आपध १, १५, १०; २२; बौध २,५,८; हिध १,४,६९,८१
प्र√यज्, प्रयजति वैश्रौ १६, १६ : ६; †प्र···यज शांश्रौ १, ६, २; आपश्रौ ३,२०,८; बौश्रौ.
†प्र···यक्षि आपश्रौ ३, २०, १०[m]; बौश्रौ १३, ३५ : ४; भाश्रौ ३, १८, ११[m]; प्र(यक्षि)

a) प्रसृ° इति पाठः? यनि. शोधः (तु. खि ३,१०,५)। b) वैप १ द्र.। c) पामे. वैप १,२१९४ a द्र.। d) पामे. वैप १,१८१२ e द्र.। e) पामे. पृ १६७० e द्र.। f) पामे. पृ १७०६ e द्र.। g) पामे. वैप १,२१९८ o द्र.। h) भावे ष्यञ् प्र.। i) द्वस.>मलो. कस.। j) °र्ले° इति पाठः? यनि. शोधः। k) बस.। l) भाप. [शौच- (तु. बौध. भाष्यम्; वैतु. आपध. भाष्यम् = आचमन- ⌊करणे कृदिति⌋)]। m) पामे. वैप १,२१३६ c द्र.।

ऋअ २, १०,४†; †प्र(इयक्षसि) आश्रौ ३, ८,१; शांश्रौ ९, २३, ११; बौश्रौ.

प्र-यजन- पाग ८,१,२७;६९.

प्र-याज[a]- -जः शांश्रौ १५, १, २६; आपश्रौ २१,२,६; २४,११,१६; बौश्रौ; -जम् शांश्रौ ५, १८, ४; वैश्रौ; -जाः आश्रौ २,१६,९××; शांश्रौ; या ८, २२[0]†; -जात् बौश्रौ ३, १५ : २६; वाश्रौ १, ७, ५, १४; वैश्रौ ५, ४ : १; -जान् शांश्रौ १, ६, १६××; काश्रौ; या ८, २२†; -जानाम् आपश्रौ ४, ७, १†××; बौश्रौ; -जाय भाश्रौ ७, १५, ११; -जे आश्रौ २,१९,९; शांश्रौ; -जेऽ-जे आपश्रौ १९, २१, १०; बौश्रौ १३, २४ : ५; ६; माश्रौ; -जेन आपश्रौ ५, २८, ८; माश्रौ; -जेभ्यः आश्रौ १, १२, ३४; काश्रौ; -जेषु शांश्रौ २, ५, १०××; काश्रौ; -जैः आश्रौ १, ५,१; आपश्रौ.

प्रायाजिक[b]- -कस्य वाश्रौ ३, १,२,२९.

प्रयाज-प्रतिषेध- -धे मीसू ९, ४,५४.

प्रयाज-प्रभृति- -ति आपश्रौ १३, २४, १०; माश्रौ ५,१,३,२२.

प्रयाज-प्रैष- -षाः काश्रौ १९,६, १४; वाश्रौ ३, २,८,९; शुअ ३, १०२; १०६.

प्रयाज-याज्या- -ज्याः शांश्रौ १,७,६; ५,१६,५.

प्रयाज-वत् काश्रौ ५, ९, २२; आपश्रौ १०,२१, १०; मीसू.

प्रयाज-शेष- -षेण वैश्रौ ६, ७ : ६; १०, १६ : ६; हिश्रौ २, २, ३२; ४,४,३५.

प्रयाजा(ज-आ)दि- -दिः शांश्रौ ८,११,१०.

प्रयाजादि-वपान्त- -न्ते वैश्रौ १४,१७ : १२.

प्रयाजाद्य ( दि-अ ) नुयाजा (न्त>)न्ता- -न्ता आश्रौ ६, १३,४.

प्रयाजा (ज-अ)नुमन्त्रण- -णम् काश्रौ ३,३,२.

प्रयाजा ( ज-अ )नुयाज- -जाः बृदे ८,१०३; या ८,२१; -जान् आश्रौ २,८,५; शांश्रौ; -जानाम् चाअ ४१ : २१; -जेषु माश्रौ १,६,५,९; २,५,५, २५; वाश्रौ १, १, ५, १४; -जौ आश्रौ २, १९,१२; पा ७, ३,६२.

प्रयाजानुयाज-प्रैष- -षाः काश्रौ १९,६,१०.

प्रयाजानुयाज-विवृद्धि- -द्धौ माश्रौ १,४,१,२८.

प्रयाजा (ज-अ)नूयाज- -जाः आपश्रौ ८,६,१८;२०,६; बौश्रौ; -जानाम् बौश्रौ २७, २ : ११; -जेषु भाश्रौ ३, १५, ४; वैश्रौ; -जौ भाश्रौ ८,१२,६.

प्रयाजा(ज-अ)भाव- -वात् कागृ १३,१०.

†प्र-यज्यु[a]- -ज्यवः आश्रौ ७, ७, ८; शांश्रौ १०,८,१५; १८, २३, ३; ऋअ २,५,५५.

प्र√यत्, प्रयतेत लाश्रौ ८, ८, १; प्रयतेरन् आश्रौ ४,१२,३.

प्र-यतन- -नम् आशि ७, ५.

प्र-यत्न[c]- -त्नः कौशि २९; आशि १,३××; -त्नम् ऋप्रा १४, ३५; -त्नात् आग्निगृ २, ७, ६ : १; विध ८१, १०××; -त्नेन बौश्रौ २७,११ : १४; वैगृ ५,१५:१९; कप्र.

प्रयत्न-तस् (:) आग्निगृ २,६,७ : १३; ७,६ : १५; कप्र.

प्रयत्न-निष्पत्ति- -त्तेः मीसू १, ३, २५.

प्रयत्न-प्रेरित- -तः आशि ८,१.

प्रयत्न-विशेष- -षात् तैप्रा १७,७.

प्रयत्न-सामान्य- -न्यात् पावा १, १,९.

प्रयत्ना(त्न-अ)नुप्रदान-तस् ( : ) पाशि १०.

प्रयत्नो(त्न-उ)त्सर्ग- -र्गे वाध २३, ४.

प्र-यत्- प्रे(प्र√इ) द्र.

प्र-यत- प्रमृ. प्र √यच्छ् द्र.

?प्रयताभिरक्ता[d] हिपि १७ : १६†.

प्र√यम्>प्र-यप्स्यत्- -प्स्यन् आश्रौ २,१०,१४.

प्र√यम्, प्र-यमण- प्र √यच्छ् द्र.

प्र√यस् > प्र-यस्य( त् > )न्ती- -न्ती अअ १२,५(४)†.

†प्र-यास- -साय[e] बौश्रौ १५, २ : १५; ३५ : ५××; आग्निगृ.

†प्रयस्[f]- -यः आपश्रौ १६, ६, ७; वाश्रौ २,१,५,२०; हिश्रौ ११,

*a*) वैप १ द्र. । *b*) तस्येदमीयष् ठक् प्र. । *c*) भाप., नाप. । *d*) पाठः (तु. तैआ ६, ५, १ प्र···क्ता)? प्रयता(त-अ)भिरक्त- > -क्ता (विप. ⌊यम-⌋, षस.) इति शोधः (वैतु. भा ⌊तैआ.⌋ प्रयताभिः, अक्तृ- ⌊भक्तान् प्रति⌋ गन्तृ-) > -क्ता इति, सा. अक्ता- > -क्ता (विप. ⌊यमी⌋) इति तत्र विशेषः । *e*) पामे. वैप १, २१९७ a द्र. । *f*) वैप १,२१९७ b द्र. ।

१,७३; –यासि आश्रौ ७,८,१.

†प्रयस्-वत्- -वन्तः ऋअ २, ५, २०; –वान् आश्रौ ३,१२,९××; शांश्रौ ५,१०,१८; या २,१३.

प्र√या, प्रयाति आपश्रौ ९, १, ९; १०,१९,६××; बौश्रौ; प्र(याति) ऋअ २,१०,८; बृदे ६,१४७†; साअ १, ७१; प्रयान्ति आपश्रौ ७,२८,४; बौश्रौ १७,४० : ११; वैश्रौ; †प्र···यासि आश्रौ २, २०, ४××; शांश्रौ; लाश्रौ ५, २, १०[a]; प्र( यासि ) शुअ ३, ८४†; प्रयात् विध ६३, ३३; †प्रयातु आश्रौ ८,११,४; शांश्रौ २,५,३; प्रयाहि आश्रौ ६, ११, ९†; †प्र···याहि आपश्रौ १६, १२,६; बौश्रौ; †प्र(याहि) काश्रौ १६, ६, १८; वाश्रौ; प्रयायात् आपश्रौ ५, ३, २३; ७, ९××; बौश्रौ; †प्रयायाः द्राश्रौ १०, २, १३; लाश्रौ ३, १०, १४; प्रयायाम् बौश्रौ १८, ४८ : १३. प्रययौ विध १, ३३; प्रययुः बौश्रौ १८, २६ : १०; आग्निगृ ३, ८, १ : २२; २३; बौपि १, १४ : २०;२१; १५ : १; प्रयास्यति हिश्रौ १३, ६, ४; †प्र-(अयासीत्) क्षुसू ३,१० : ३६; ऋअ २,९,९०; साअ १,५३६; †प्रो(प्र-उ ⌊अयासीत्⌋) जैश्रौका ४०; साअ १,५५७. प्रयापयति वाश्रौ २,१,३,२९. प्रयियासेत् भागृ ३,३ : १२.

प्र-याण[b]- -णः आपश्रौ १०,१९,८; –†णम् आपश्रौ २१,२,९[c]; या १२,१३; शुप्रा ६,८; तैप्रा ७, ६; १२,४; –णस्य बौश्रौ ६,९ : १; १०,१७ : १; –णे आपश्रौ २४, १,४१; बौश्रौ.

प्रयाण-काल- -ले वैगृ ५,१ : ९; १६.

प्रयाण-यजुस्- -ज़ुः बौश्रौ २१, १० : १०; २२,८ : २६.

प्रयाणो( ण-उ )पपत्ति- -त्तौ आश्रौ ३,१०,३.

प्र-यात्- -याति हिश्रौ ३, २, ५९; –यान्तः हिश्रौ ९, ५, १६; –यान्तम् बौश्रौ ४,१ : २२; वैश्रौ १२,१४ : १०[d].

प्र-यात- -तः अप १, ३१, ६; ६७, ६, ३; –तम् हिश्रौ ७,१,६५?[d]; हिपि १८ : २५; –तस्य सु १, ४; आज्यो ३, १; –ताः अप ७०[३], ९, ४; –ते बौश्रौ १४, १९ : २०; –तेषु बृदे ५, ७२.

प्र-याप्य वागृ १५,४.

प्र-याय माश्रौ १,६,३, ४; द्रागृ ३, १,२९.

प्र-यायिन्- पाउभो २, १, २९०; –यी अप ५१,४,२.

प्र-यास्यत्- -स्यन् आपश्रौ ६, २८, १; ५××; बौश्रौ.

प्र-यै पा ३,४,१०.

प्रयाग[e]- -गम् शंध ११६ : १३; –गे शंध १९४; विध ८५,२८.

प्र-याज- प्रभृ. प्र√यज् द्र.

प्र√यु, प्रयौति आपश्रौ २,८, ५; ७, २५,४; ५; बौश्रौ ४,९ : १७[f]; माश्रौ ७, १४, १२; १९, १३; २०, १[f]; वाश्रौ; या ४, १९; प्रयौयात्[g f] बौश्रौ २५, ३२ : १२;२२;२८.

†प्र···युयोतन[h] आपमं २, ३, १; हिगृ १,५, १; जैगृ १, १२ : २६.

†प्र-युत्- -युतः आपश्रौ १२, ३, २; हिश्रौ ८,१,४१; जैश्रौ १०,८.

१प्र-युत,ता- पाग ६,२, १४७[i]; –†तम्[j] काश्रौ ६,८,११; शुअ १, ४०४; –†ता[j] आपश्रौ ७,२०, ४; भाश्रौ; –ताः वैताश्रौ ३८, ५†; –तान् माश्रौ २,३,७,८.

२प्र-युत[k]- पाग २,४, ३१[l]; –तम् क्षुसू २,९ : १७; अप ४८,६६†; या ३,१०; –तात् वाश्रौ ३, ४, २,१०; –तानि शांश्रौ १४, ८२, २; बौश्रौप्र ५४ : १०; –ताय वाश्रौ ३, ४,२,११†; –ते शांश्रौ १५, ११,४; आपश्रौ १६, ३१, १†; बौश्रौ.

†प्र-युति- -ती[m] आश्रौ ३,१३,१८; माश्रौ २, ५, ४,९; वैताश्रौ २३, १२.

प्र-युत्य वाश्रौ २,२,४,९.

प्र-युन्वत्- -न्वद्भ्यः, –०न्वन्तः हिगृ २,९,२†[n].

प्र-युव(त् >)ती- -ती या ९,२६; –तीम् या १०, २९.

प्र-यूय बौपि १,३ : १५; २२;३०.

*a*) पाभे. वैप १,२१९७ f द्र. । *b*) भाप., नाप. (मन्त्र-) । *c*) सपा. हिश्रौ १६,१,३३ प्रायणम् इति पाभे. । *d*) सपा. प्रयान्तम् < > प्रयातम् इति पाभे. । *e*) =तीर्थ-विशेष- । व्यु. ? । बस. इति शक. । *f*) सपा. प्रयौति < > प्रयौयात् इति पाभे. । *g*) =प्रयुयात् । *h*) पाभे. वैप २, ३खं. प्र···युयोतन आपम. । *i*) प्र-युक्त- इति पाका. । *j*) पाभे. वैप १,२१९८ l द्र. । *k*) वैप १ द्र. । *l*) तु. मंत्रा १,६,१४ टि. द्र. । *m*) पाभे. वैप १, २१९८ o द्र. । *n*) पाभे. पृ १७१३ l द्र. ।

प्र √युच्छ्, †प्रयुच्छसि आश्रौ ७, ४, ४; आपश्रौ ६,१८,१××; बौश्रौ.

प्र √युज्[a], प्रयुङ्क्ते आश्रौ ९, ३, ३; बौश्रौ १३,१०:३†; वाधूश्रौ; या ७,१; प्रयुनक्ति आपश्रौ १,७,५; ११,४××; काठश्रौ; हिश्रौ १३, १,१३[२]†[b]; प्रयुङ्क्तः भाश्रौ ८, ५,५; वैश्रौ ८,१०:२; हिश्रौ ५, २,२०; प्रयुञ्जते वाधूश्रौ ३,८३: १; कौगृ; प्र ̈ ̈युनक् बौश्रौ २, ९:११†; प्रयुञ्जीत काश्रौ २२, ११,३१; आपश्रौ १४, १४,१२; बौश्रौ; प्रयुञ्ज्यात् जैगृ २, ८: १६; ऋप्र ३,६,५; अअ; प्रयुञ्ज्युः अप ३०, २, २; प्रयुञ्जीमहि बौश्रौ २,८,११†.

†प्र(युयुज्रे) ऋअ २, १०, ३३; बृदे ७,३४.

प्रयुज्यते आपश्रौ ९, १७, ५; हिश्रौ १५, ७, २५; लाश्रौ; प्रयुज्येते निसू २, ५:३४; प्रयुज्यन्ते शांश्रौ १५, ११, ५; आपश्रौ; †प्र(युज्यन्ते) तैप्रा ७, ६६; भाशि १०८; †प्रयुज्यताम् आश्रौ १, १,४; १४, ३; बौश्रौ; प्रयुज्येत निसू १, ११: ३; मैअ ५; प्रयुज्येरन् आपश्रौ १४, १५, ३; हिश्रौ १०,७, २५××; निसू. प्रयोजयेत् आपश्रौ ७, १२, ३; बौश्रौ २,२:१७; अप.

प्र-युक्त,क्ता- पा ६,२,१४७[c]; -क्तः बृदे २,६९; आशि १,२; -क्तम् हिश्रौ २१,२,४५; निसू २,५:२०; अप्राय; -क्ता अप ३२, १, १२; ४१,२,१३; -क्ताः अप ३७, १, ६†; -क्तानाम् आपश्रौ ९, १३, १३; २०,१०,८; माश्रौ; -क्तानि निसू १०,३: ३८; अप १,२२, ३; शंध ४१७[?d]; या १२, ३०; आज्यो ४,१३; मीसू १, ३, ७; -क्तायाम् अप ७०, १, ९; -क्ते वाश्रौ ३,२, १, २७; वैश्रौ १४, ५:६; -क्तैः अप ७, १,१.

प्रयुक्त-तम- -मानि निसू १०, ३:२२.

प्रयुक्त-त्व- -त्वात् मीसू ३, ७, ३९; ६,६,३१××.

प्रयुक्त-पूर्व- -र्वे आपश्रौ ११, ६, ३; हिश्रौ ७,५,१.

प्रयुक्त-प्रतिषेध- -धः निसू ५, ३:४.

प्र-युज्[e]- -युक् वाधूश्रौ ४, २९: ४; -युजः वाश्रौ ३,३, ४, ३५; -†युजम्[f] बौश्रौ १०, १३: १-३; माश्रौ ६,१,३, २०; मागृ १,६,२;२३,६; -†युजे[f] आपश्रौ १०, ८,५××; बौश्रौ.

प्रायुज[g]- -जेषु बौश्रौ २४, ११:५.

प्रयुग्-हविस्- -वींषि काश्रौ १५, ९,७.

प्रयुजां-हविस्- -विर्भिः आपश्रौ १८,२२,५; २२,२५,१३; बौश्रौ १२, १९: १५; १९; १८, ५: १७; १८; ६: १९; २०; हिश्रौ १३,७,२३; २३,४,८.

प्र-युजत्- -जन् वाश्रौ १,३,७,२०.

प्र-युज्य शांश्रौ १५, १२,८; आपश्रौ १, १५,७××; काश्रौसं.

प्र-युज्यमान- -नाः हिश्रौ १, १, १३; -ने पा ८,२,१०१.

प्र-युञ्जत्- -ञ्जन् गौपि २,४,७;८.

प्रयुञ्जती- -ती ऋअ २, ५, ४७†,

प्र-युञ्जान- -नः आश्रौ २, १२, ६; बौश्रौ २८, २:५८; लाश्रौ; -नस्य शांश्रौ ३,८,५.

प्र-योक्तव्य,व्या- -व्यः अप ३१, ४,४; माशि १३, १०; याशि; -व्यम् नाशि १, १, २; -व्या अप ७०[२], ६, ५; कौशि ६४; ६६; -व्याः बौश्रौ २६, ५: १; २७,६: २४; अप; -व्ये बृदे ३,३१.

प्र-योक्तृ- -क्तरि मीसू ३, ७, १८; -क्ता अप ३१, ७,४ -क्तुः ऋप्रा १३,१३; पावा ३,२,१११.

प्र-योक्ष्यमाण- -णः आश्रौ २, १५, १; -णानाम् आपश्रौ २०, १०, ८; हिश्रौ १४,३,५.

१प्र-योग[h]- पाग ५,१, ६४; ७, ३, २०; -गः आश्रौ २, १४, ३; शांश्रौ; या ७,३१; -गम् आपश्रौ २०, १०, ८; अप ३३, ४, १; मीसू ११, १, ६४; -गस्य जैश्रौका २१५; अप ४७, २, ८; गौध; -गाणाम् निसू २, ८: ७; -गात् वैश्रौ १३, ६:१३; अप ३६, २,६; आपध; -गान् माशि ४,९; १५, २; पाशि २७; नाशि २,८,१२;१७; -गाय मीसू ६,२,७; -गे वाश्रौ १,१,१,१; हिश्रौ; -गेण बौश्रौ २७,४:२७; -गेषु माशि ६,४;८.

प्रायोगिक- पा ५, १, ६४;

*a*) पा १,३,६४ परामृष्टः द्र.। *b*) पाभे. पृ ५६९ c द्र.। *c*) पृ १७२२ i द्र.। *d*) पर्युं° इति पाठः? यनि. शोधः (तु. मदनपारिजातः [७३४])। *e*) वैप १ द्र.। *f*) पाभे. वैप १, २१९९ i द्र.। *g*) =(प्रयुग्हविःसंबन्धिन्-) यज्ञ-विशेष-। *h*) भाप.।

७,३,२०.

ᵃप्रयोग- -गे पावा २,३,१;६६.

प्रयोग-ग्रहण- -णम् पावा ८,२, ८५.

प्रयोग-चोदना- -ना मीसू ११, २,३६.

प्रयोगचोदना(ना-अ)भाव- -वात् मीसू १,३,३०.

प्रयोग-तस्(:) बृदे १,५९; मीसू ११,३,२१.

प्रयोग-दीपिका- -काम् जैश्रौका ५.

प्रयोग-नियमा(म-अ)र्थ- -र्थम् पावा १,४,८०; ३,१,२.

प्रयोग-निर्देश- -शात् मीसू ११, ३,२३.

प्रयोग-पृथक्त्व- -क्त्वे हिश्रौ १, १,७०.

प्रयोग-भूत-त्व- -त्वात् मीसू २, २,१६.

प्रयोग-रूप-सामर्थ्य- -र्थ्यात् मीसू ५,१,१६.

प्रयोग-वचना(न-अ)भाव- -वात् मीसू ५,३,२७.

प्रयोग-वचनै(न-ए)कत्व- -त्वात् मीसू ६,३,४; ११,१,३५××.

प्रयोग-विद्[a]- -वित् बृदे १, १२; माशि ४,१४.

प्रयोग-शास्त्र- -स्त्रम् मीसू १, ३, ११.

प्रयोग-संनिकर्ष- -र्षः मीसू १, १,२६.

प्रयोग-समवायित्व- -त्वात् मीसू ६,८,३९.

प्रयोग-साधारण्य- -ण्यात् मीसू ११,३,२६.

प्रयोग-सामर्थ्य- -र्थ्यात् मीसू २,१,२९.

प्रयोग-सौष्ठव- -वात् माशि १५,४.

प्रयोगा(ग-अ)न्तर- -रे मीसू ६, ५,५२.

प्रयोगा(ग-अ)न्यत्व- -त्वात् पापवा ३.

प्रयोगा(ग-अ)र्थ- -र्थे ऋप्रा १३, ४९; पाशि ३०; माशि.

प्रयोगिन्- >ᵃगि-त्व- -त्वात् काश्रौ १,५,७.

प्रयोगै(ग-ए)कत्व- -त्वे मीसू ४, २,३१.

प्रयोगो(ग-उ)त्पत्त्य(त्ति-अ) शास्त्रत्व- -त्वात् मीसू १,३,२४.

²प्र-योग[b]- -गः ऋअ २, ८, १०२; साअ १,१९; २१; चाअ १६ : ११.

प्र-योजक- -कः पावा ३,१,२६.

प्रयोजक-त्व- -त्वात् मीसू ११, ३,३८.

प्र-योजन- -नम् हिश्रौ ८,१,४०; बौध ३,१,१४; अप्रा; पा ५,१, १०९; -नात् भाश्रौ ६, १६, ६××; -ने आपध २, २६, ३; हिध २, ५, १९८; -नेन पावा ५,१,१२; मीसू ४,३,२९;३४.

प्रयोजन-योद्धृ- -द्धृभ्यः पा ४,२,५६.

प्रयोजन-वत्- -वत् मीसू १०, ४,३६.

प्रयोजना(न-अ)न्यत्व- -त्वम् मीसू २,३,२४.

प्रयोजना(न-अ)भिसंबन्ध- -न्धात् मीसू ११,१,१.

प्रयोजना(न-अ)र्थ- -र्थम् मीसू २,३,२.

प्रयोजनै(न-ए)कत्व- -त्वात् मीसू ३,६,३८; ११,४,७;४५.

प्र-योजयत्- -यन् विध ६७,३७.

प्र-योजयितृ- -ता आपध २, २९, १; हिध २,६,१४.

प्र-योज्य,ज्या- पा ७,३,६८; -ज्यः कप्र ३, ४, ७; अप ३३, ३, १; अशां २३, १; गौध २, ४३; -ज्यम् काग्रृउ ४४ : १०; माशि ४, ६; आज्यो ५, ८; -ज्याः कौशि ५९.

प्र√युध् ,प्रयोधयेत् आगृ ३,१२,१६.

प्र-यै प्र√या द्र.

प्र-योक्तव्य- प्रभृ. प्र√युज् द्र.

ʔप्रयोज्यामः[c] दंवि १,३.

प्र-रथ- पाग २,१,१७.

प्र√रद् , प्र···अरदत् ऋप्रा २,४६ᵗ.

प्र√रम् ,प्ररमयति या २,१८.

प्र√राध् > प्र-राध्य- -ध्यम् आश्रौ ९,९,१२ᵗ.

ᵗप्र√रिच् , प्ररिरिचे बौश्रौ १३,२८ : १८; १९; प्र···रिरिचे ऋप्रा २, ३८; प्र (रिरिक्षे) साअ १,३१२; प्र (रिरिचाथे) आश्रौ ३,७,१३; शांश्रौ १, ८, ११; ६, १०, ९; माश्रौ ५,२,८,३१; प्रारिचत् या ३,६∮.

प्र-रेक[d]- -कः आपश्रौ १८, १३, २२; -कम् आपश्रौ १८, १६, १३; बौश्रौ १०, ५४ : ११××; वैश्रौ १९, ६ : १२०; -काः बौश्रौ १२, ८ : २४; -के बौश्रौ १८, १८ : १०; -कैः वैश्रौ १९, ६ : १२४.

---

a) उप. <√विद् [ज्ञाने]। b) व्यप. (ऋषि-)। वैप १ द्र.। c) पाठः? प्रयोज्याः, तद् इति द्वि-पदः शोधः विमृश्यः। सस्थ. ʔदन्त्याः>दन्त्यात् इत्यपरः शोधः (तु. संस्कर्तुः टि.)। d) =संपात-।

प्र√रुच्, प्ररोचयति माश्रौ १,७,३, २३××; वाश्रौ १,६,१,२९.
प्र√रुज् >प्र-रुज्य वौश्रौ १,१८ : २.
प्र√रुद्, प्ररोदिति अप ७०[3], ११, ३०.
प्र-रुद(त् >)न्ती- -न्त्याम् शांगृ १,१५,२.
प्र√रुध् > प्र-रोधन[a]- -नम् भाशि ४७†.
प्र√रुह्, प्ररोहति काध २७६ : ६; २८० : ६;७; प्ररोहन्ते अप १०, १,२१; प्ररोहसि शांगृ ६,६,९[b]; प्ररोहन्तु पागृ ३, १५, २०; प्ररोहेत अप ७०,१०,३; प्ररोहेयुः अप ६७,२,२.
प्र-रूढ->°ढ-कक्ष°- -क्षे आपश्रौ ८,५,२.
प्र-रोप्य वौश्रौ २१, २४ : १९.
प्र-रोह[d]- पाग ४, ४, ६२[e]; -हः, -हम्, -हाय वैताश्रौ २६,११.
प्रारोह- पा ४,४,६२.
प्र-रोहण- ( > °णीय- पा.) पाग ५,१,११.
†प्र-रोह(त् >)न्ती[b]- -न्ती आपश्रौ १६,२४,१; बौश्रौ; वैश्रौ १८, १७ : ३१?[f]; हिश्रौ.
प्र-रेक- प्र√रिच् द्र.
प्र√रेज्, प्र (रेजते) माश्रौ ५,१,६, ४३†.
प्र√लप्, प्रलपन्ति अप ७०[2],७,१८.
प्र-लाप- -पः बृदे १,३७; ५५.
प्र-लापिन्- पा ३,२,१४५; -पिनः अप ६८,१,३८[2].
प्र√लम्ब् > प्र-लम्ब[g]- -म्बः अप ५३,३,१.
प्रलम्ब-ज्ञ( ङ्घा > )ङ्घा[h]- -ङ्घाः बौश्रौप्र २५ : २.
प्र√लभ्,म्भ् >प्र-लम्भन- -ने पा १,३,६९.
प्रलम्भन-शालीनीकरण- -णयोः पावा ६,१,४८.
प्र-ललाट[i]- -टे बौश्रौ १०,३० : ११; वैश्रौ १८,१७ : १५.
प्र√लिख्, प्रलिखते बौगृ १,७,२८; प्रलिखति पागृ २, १४, १५; †प्रलिखताम्, प्रलिखन्ताम् कौगृ ४, २, ३; शांगृ ४, १५, ७; प्रलिखस्व पागृ २, १४, १६[3].
प्र-लिख्य कौसू ७६,५.
प्र√लिप्, म्प्, प्रलिम्पते काश्रौ १५,६,८; प्रलिम्पति माश्रौ ६, १, २, २६; कौसू २६, २९××; प्रलिम्पन्ति बौश्रौ १५, ३० : १२; वाधूश्रौ ३,८१ : ५; हिश्रौ १४, ४, १८; प्रलिम्पताम्, प्रलिम्पन्ताम् शांगृ ४,१५,८†[j].
प्र-लिप्य शांश्रौ ४,१५,२२; आपश्रौ.
प्र-ले(पक >)पिका- ( >प्रालेपिका- पा.) पाग ४,४,४८.
प्र-लेप्स्यमान- -नः भागृ २,२० : ३.
प्रलिश[k]- -शः सु २३,३.
प्र√लिह्, प्रलेहयेत् बौश्रौ २३, १ : ४४; ४५.
प्र-लेहन- -नात् गोगृ ३, ६, ३; द्रागृ ३,१,४५.
प्र√ली, प्रलीयते अप ६८, २, २५; ६९,६,४; ७०[3],९,३; प्रलीयन्ते अप ६८,२,३४.
प्र-लय- -यम् अप ७१, १९,४; बृदे १,६१.
प्रालेय- पा ७,३,२.
प्रलया(य-अ)न्त[l]- -न्तम् वैध १,११,४.
प्र√लुप्, प्रलुप्येत याशि १,७९.
प्र√लुभ्, प्रलुलुभे शांगृ ३,१३,५†[m]; †प्रलुलोभ[m] बौश्रौ २,१० : ६; आपमं २, १९, १××; कौगृ ३, १५, ५; आग्निगृ ३, १,१ : २०; बौगृ २,११,२८; हिगृ २,१०,७.
प्रवक- √पु द्र.
प्र-वकल[n]- -लानि बौश्रौ १५,१४ : १.
प्र-वक्तृ- प्रसृ. प्र√वच् द्र.
प्र√वच्°, †प्र (विवक्मि) शांश्रौ १०, ५,२४; ऋअ २, ७, ६; बृदे ५, १६१.
प्रोवाच आश्रौ १२, ९, १८; शांश्रौ १४, १२,२××; वाधूश्रौ या १०, ३२; १४, १; प्रोचुः शांश्रौ १४, ४०, १; बौश्रौ; प्र···वक्षे या ५,८†ᵠ; प्रवक्ष्ये हिपि १७:१; प्रवक्ष्यामि आग्निगृ २, ५, १ : ५; ७, ७ : १; जैगृ; प्रवक्ष्यामः वाधूश्रौ ४,११ : १३; ऋशां २०, १; या ९,३†.
†प्र (वोचाति) ऋअ २,१०,७५; बृदे ७,११५; †प्र···वोच>चा बृदे ५, ११९; ऋप्रा ८,२९; प्र (वोच>चा) ऋअ २,६, ५९†; प्र···वोचेयम् या १०, ४२†ᵠ; प्र (वोचेयम्) बृदे ४, ४; †प्रावोचः भाश्रौ १०, २,२[4]; वैश्रौ १२, १ : ११; भागृ २, २५ :

a) वैप १ द्र.। b) पामे. वैप १,२२०१ b द्र.। c) बस. उप. =गुल्म-। d) भावे कर्तरि च कृत्। e) पुरोह- इति पाका.। f) °न्ति इति पाठः? यनि. शोधः। g) उप. कर्तरि प्र.। h) =ऋषिविशेष-। बस.। i) प्रास.। j) सपा. कौगृ ४,२,३ अनुलि° इति पामे.। k) व्यप.। व्यु.?। l) बस. वा. -किवि.। m) परस्परं पामे.। n) बस. उप. =वल्कल-। o) पावा ७,३,६६ परामृष्टः द्र.।

बौध १,५,६२.

बीभ(त्स्य>)त्स्या[a]- -त्स्याः बौश्रौ १९,१०:६२.

बधक[b]-> १बाधक,का[c]- -कः शांश्रौ १४,२२,१४; काश्रौ २२,३, ९; आपश्रौ २२,४,१५; हिश्रौ १७, २,२१; -कम् बौश्रौ १४, १६: १; आग्निगृ २, ५, ५: १?[d]; कौसू ३६, ३६; -काः आग्निगृ २,५,५: २?[e]; -कान् बौश्रौ १४, १६: २; ३; कौसू ४९, २१; -कानि बौश्रौ १८, ३६: २; -कायाम् आग्निगृ २, ५, ५: ३; -के कौसू १६,१९[f]; -केन बौश्रौ १४,१६:५;६; आग्निगृ २, ५,५: २?[g]; कौसू ४७, ४८;११६,६.

बाधकी- -की अप्राय २,९; -कीम् कौसू ४७, १३; -क्यास् बौश्रौ १४,१६: ६.

बाधक-दण्ड- -ण्डानि कौसू १६, १७.

बधित्र- पाउवृ ४,१७३.

१बधिर- √बध् द्र.

२बधिर-(>बाधिरक- पा.) पाग ४, २,८०.

बधिरक[h]- पा,पाग २,४,६९.

बधिर-ता-,°र-त्व- √बध् द्र.

बधिरिका[h]-(>बाधिरिक- पा.) पाग ४,१,११२.

बधिरिमन्-,बध्नत्- √बध् द्र.

बध्न्य- -ध्न्यम् दंवि १,१०†.

बध्यत्- प्रभृ. √बध् द्र.

बन्धक[i]- पाग ४,१,४१[j].

बन्धकी[k]- पाग २,१,७०; ४, १,१२३; १२६; पा ४,१,४१.

बान्धकिनेय- पा ४, १, १२६.

बान्धकेय- पा ४,१,१२३.

बान्धकि[l]-(>°कायन- पा.) पाग २,४,६१.

बन्धथ-,बन्धन- प्रभृ. √बध्, द्र.

बन्धा(>बन्धा√कृ पा.) पाग १, ४,६१.

बन्धा[h]-(>बान्धायनि- पा.) पाग ४,१,१५४[j].

१बन्धु- √बध् द्र.

२बन्धु[m]- -न्धुः निघ २,१०†.

३बन्धु[h]- पाग ४,१,१५४; -न्धुः ऋअ २, ५, २४; शुअ १, १९२××; साअ १, ४४८; -न्धोः चाअ ३०:१९.

बान्धवायनि- पा ४,१,१५४.

बन्धु-प्रभृति- -तयः बृदे ३, ५९; -तीन् बृदे ७,८६.

बन्ध्वा(न्धु-आ)दि- -दीन् ऋअ २, १०,५६.

४बन्धु->२बन्धु-र- पागम ४३१.

बन्धुका-(>°किन्- पा.) पाग ४, २, ८०.

बन्धु-गामिन्- √बध् द्र.

बन्धुजीव[n]->°व-क[o]- >°क-वत् अप ५८,१,७.

बन्धुजीवा (व-अ) ध(र>)रा[p]- -राम् विध १,२२.

बन्धु-ज्ञान- प्रभृ. १बन्धुर- √बध् द्र.

बन्धूक[b]- पाउ ४,४१.

बन्धूक-निर्गुण्डी-शिग्रु-तिल्व-तिन्दुक-ज- -जम् विध ६१, ३.

बन्धूर- पाउवृ १,४१.

बन्ध्य- √बध् द्र.

बप्सत्- √भस् द्र.

†?बभ्रु- -भ्रुः[q] हिश्रौ ६,७,८; हिगृ १, २९,१.

बभूवस्-,बभूवुषी- √भू द्र.

बभ्रि- √भृ द्र.

१बभ्रु,भ्रू[r]- पाउ १, २२; पाग ५,२, १००; ३, १०८; -†भ्रवः आपश्रौ २०,१४,७[s]; हिश्रौ १४, ३,१६[s]; वैताश्रौ; -†भ्रवे आश्रौ ३,८, १; निसू ९, ३: ३३; अप ६६,३,२; साअ २, ७९४; -भ्रु ऋप्रा १७, १४; -भ्रुः आश्रौ ८, ७,२४†; शांश्रौ १०, ११, ८†; काश्रौ १५, २, १५[t]; ९, ५[t]; आपश्रौ ६, ३१, ५[t]; २२, १५, ३; वाधूश्रौ ४, ९६: १२[2t]; वाश्रौ १,५,५,२[t]; ३,३,१,३०[t]; ४,३,१७†; हिश्रौ; भागृ २;३२: १२[u]; अप ४०, ५,१[u]; या १२, ४०†; -†भ्रुणा कौसू ४६,५५; अप १, ३६, ७; -भ्रुम् आपश्रौ

a) विप. (२अप्- [तु. तैआ १,२६,७])। b) =वृक्ष-विशेष-। c) विकारार्थे अण् प्र. (पा ४, ३, १३७ [वैतु. PW. प्रभृ. < २बाधक- इति])। d) बाधः इति पाठः? यनि. शोधः (तु. बौश्रौ.)। e) °कः इति पाठः? यनि. शोधः। f) =[बाधक-प्रज्वालित-] अग्नि- (तु. दारिलः)। g) अबाध° इति पाठः? यनि. शोधः (तु. बौश्रौ.)। h) व्यप.। i) व्यु.? < √बन्ध् इति अभा. शक.। j) तु. पागम.। k) =स्वैरिणी-। l) रान्धकि- इति पाका.। m) धन-नामन्-। n) =[रक्तवर्ण-] पुष्प-। व्यु.?। < बन्धु- + जीव- इति अभा.। o) स्वार्थे प्र.। p) बस. उप. =अधरोष्ठ-। q) पाभे. वैप १,२२७० l द्र.। r) वैप १ द्र.। s) पाभे. वैप १,२२६३ n द्र.। t) नाप. (गो-)। u) =देवता-।

१४,६,१३, काठश्रौ ८३; बौश्रौ; –भ्रुवे बौश्रौ १४, २१ : २९[a]; –भ्रू[b] या ४,१५†ǂ; –भ्रूः काश्रौ ७,६,१२[c]; माश्रौ १,५,२,१५[d]; –भ्रूणाम् या ९,२८†ǂ; –भ्रूणि वाधूश्रौ ३, १०१ : ३; –भ्रून् आपश्रौ २०, १४,१३†[e]; हिश्रौ १४,३,१८[3]†[e]; अप ६३, १,२; –?भ्रूम्[f] वाधूश्रौ ४, ३५ : २; –†भ्रोः कौसू २६.४३; अअ २, ९; –भ्र्वोः या ४,१५.

बाभ्रुक– पा ५,३,१०८.

बभ्रु-क(र्ण>)र्णी– -र्ण्याम् बौश्रौ २०,२५ : ५†.

बभ्रु-तूल[b]– -लानि माश्रौ ३,६,४†.

†बभ्रु-नीकाश– -शाः शुप्रा ३,९०; १२९.

बभ्रु-पिङ्गल[g]– -लः अअ ६,१४.

बभ्रु-पिपीलिका– -कानाम् कौसू ११६,३.

बभ्रु-मत्– पा ५,२,१००.

बभ्रु-सूत्र– -त्रेण आपगृ २३, ४[h]; भागृ २,२८ : ५.

†बभ्रु-लो(मन्>)म्नी[b]– -म्नी आपश्रौ १०, २२, ४; हिश्रौ ७, २,१६.

बभ्रु-व(त्स>)त्सा[i]– -त्सायै बौश्रौ १४,२१ : २९.

बभ्रु-व(र्ण>)र्णा[i]– -र्णानाम् या ९,२८.

बभ्रु-श– पा ५,२,१००.

बभ्र्व(भ्रु-अ)नूकाश[i]– -शान् आश्रौ २०,१४,१३[e].

२बभ्रु[g]– पाग ४, १, १०५; –भ्रवे आग्निगृ १,२, २ : २२; बौगृ ३, ९,५; भागृ ३,१० : ७; हिगृ २, १९,६; –भ्रुः ऋअ २, ५, ३०; –भ्रुम् बृदे ५,३३.

बाभ्रव– > °व-दानच्युत-, °व-शालङ्कायन– पा, पाग ६, २, ३७.

बाभ्रव्य– पा ४,१,१०५; १०६; पाग ४, २, ५३; –व्यः ऋप्रा ११,६५; –व्यम् कौगृ २,५, ३; शांगृ ६,१,१;–व्याः बौश्रौप्र३१: ८; –व्याय आश्रौ १२, ९,१८.

बाभ्रव्यक– पा ४,२,५३.

बभ्रु-बाभ्रव्य– -व्यौ अप ४३, ४, २०.

?बभ्रूय भागृ २,३२ : १२.

?बभ्रौपव्दैः दंवि २,४.

बम्ब– > बम्बा-विश्ववयस[b]– पा, पाग ६,२,१४०[j]; –यसोः चाअ ४ : ५.

†बम्भारि[b]– -रिः शांश्रौ ६,१२, २०; बौश्रौ ६,२९ : १२; वैश्रौ १४, १२:१२; जैश्रौ १३ : १६; –०रे बौश्रौ ६,१५ : १५[k].

?बयः दंवि २,२.

†ब⌊,व[l]⌋रासि,सी[b]– -सिम् हिश्रौ १०,७, ३[m]; –सी आश्रौ ९,४, १७; आपश्रौ १८, १०, २३; लाश्रौ ९,२,१५; –सीम् आपश्रौ १४,१३,३[m].

ब⌊,व⌋रु[n]– पाग ३,४,७४[o]; –रुः ऋअ २,१०,९६; बृदे ६,६६[p]; –०रो बृदे ६, ६३[p]; –रोः शांश्रौ ११, १४,२६; ऋअ २,८,२४[p].

ब⌊,व[q]⌋र्कर[r]– पाउभो २,३,६४; –रम् काश्रौसं ३५:१५; –रस्य काश्रौसं ३६ : १; वैश्रौ १३,८ : १४[m]; हिश्रौ २४, २, १०[m]; –राय[m] आपश्रौ १५,६,१६; माश्रौ ११, ६,१२.

वर्करो(र-उ)त्सर्ग– -र्गः काश्रौसं ३५ : १४.

वर्करो(र-उ)न्नयन– -नम् काश्रौसं ३५ : १४.

बर्जह[b]– > बर्जह्य[b]– -ह्ये दंवि २,२†.

√बर्च् पाधा. भ्वा. पर. गतौ.

बर्बर[s], वर्वर[t]– पाउ २,१२१; पाउभो २,३,३५; पाग २,२,३८; ४,२, ८०[u]; १२७[u]; ३,९३.

बार्बर– पा ४,३,९३.

बार्बरीय– पा ४,२,८०.

बर्बर-ता– -ता ऋप्रा १४,२६.

बर्बर-तीर[v]– -राः अप ५६,१,५.

बर्स्व[w]– -र्स्वेषु तैप्रा २,१८.

√बर्ह् पाधा. भ्वा. पर. प्राधान्ये; चुरा. पर. हिंसायाम्, उभ. भाषायाम्.

१,२बर्ह–, बर्हणा– प्रभृ. √बृह् (वधा.) द्र.

बळ् बट् द्र.

---

*a*) =धेनु-। *b*) वैप १ द्र.। *c*) °भ्रुः इति चौसं.। *d*) विप. (शर्करा-)। *e*) पाभे. पृ १३५२ a द्र.। *f*) °णि इति ?संस्कर्तुः टि.। *g*) =ऋषि-विशेष-। *h*) °भ्रू° इति Winternitz.। *i*) बस.। *j*) तु. पाका.। लम्बावि° इति भाण्डा. प्रमृ.। *k*) पाभे. वैप १,२२६४ q द्र.। *l*) हिश्रौ. पाठः। *m*) परस्परं पाभे.। *n*) व्यप.। *o*) अर्थः ?। वह– इति भाण्डा.। *p*) व° इति पाठः। *q*) पाउभो. काश्रौसं. पाठः। *r*) =छगल-। व्यु.? < √वृक् (आदाने) इति अभा.। *s*) नाप.। व्यु.? < √वृ इति पाउ., < √बृ इति पाउभो., < √बर्ब् इति पाउवृ ३, १३१। *t*) पाउ. पाठः। *u*) वर्वर– इति पाका.। *v*) देश-विशेष-। *w*) वैप १,२२६५ g द्र.।

√बल् पाधा. भ्वा. पर. प्राणने धान्यावरोधने च; चु. उभ. प्राणने.

१बल[a]– पाग २,४, ३१; ५, २,१३६; पागवा ५,२, ९७; –लम् आश्रौ ६, ३, १; १२,२; शांश्रौ ३, ७, ४†[b]; १४,५८,१;६४,१;१८,३, २†[c]; ११, २; †काश्रौ ५, १२, १२[c]; १३, १[2]××; आपश्रौ; या ३,९ɸ; ६, २३××; –लस्य बृदे २,६; ३,६२; निघ २,९; या ५, २५; ९, २५××; –लात् सु ९, २; वाध १७, ७३; शंध; या ६, २८; ७, २†; १०,१०; –लानि या ४,५; –†लाय शांश्रौ ४,५, १; आपश्रौ; काग् ४१, १३[d]; –ले बौश्रौ २६, ५ : २१; दंवि १, ५†; २, १०; –लेन हिश्रौ १५,५, ४†; वैताश्रौ; †बौध २, १, ३४[e]; ४,२, ११[e]; या ६,८; ८,२××.

बल-काम– -मः शांश्रौ १४,५८,१; ६४, १[2]; काश्रौ ४, १५, २३; क्षुसू; –मस्य आपश्रौ ६, १५, १; वाश्रौ १,५,३, १; वाश्रौ.

बल-कृति– -तिः अप ४८, १४०; या ७,१०; ८,२; –त्या बृदे १, ८७.

बल-क्षोभ– -भः अप ६३,३,१०.

बल-(ज>)जा[f]– -जायाम् आपश्रौ ३,४,८; हिश्रौ २,३,४९.

†बल-द[a]– -०द आपश्रौ ५,२४,४; भाश्रौ ५,१६, १; माश्रौ १, ५, ६,२; वाश्रौ १,४,४, ४७; हिश्रौ ३,५,२५.

बल-दा[a]– -दाः दंवि १,६†.

बल-दावन्[a]– -वा कौसू ७२,१८†[g].

बल-धन– -नयोः या ८,२.

बल-धा– -धा(?धाः[h]) जैगृ १,२ : १६†[i].

बल-नामन्– -म या २,२४;९,२५; –मानि निघ २,९; या ३,९.

बल-पति[a]– -तिः काश्रौ ५, १३, १†.

बल-पुष्टि-कर– -रम् बृदे ८,३२.

बल-प्रती(क>)का[j]– -का या १०, २१.

बल-प्रवा(द>)दा[j]– -दाः निसू ६, ११ : ८.

बल-भू– -भूः जैगृ १,२ : १६†[k].

बल-वत्– पा ५, २, १३६; –वत् लाश्रौ ७,१२, ५; विध २७, ७; शुप्रा १, १५९; –वतः कौसू ४, १†[l]; –वता बौगृ ४, ४, ९; –वत्सु या १, २०; –†वद्भिः बौगृ २,७,१६; हिगृ २, ८, २; चाअ १७ : ११?[m]; –वन्तः अप १८, ३,११; –वन्तम् सु १४,२; –वान् बौश्रौ ५, १३ : १६××.

बलवती– -ती शंध ३३३; या ९, १०; आज्यो ७, १९; –तीम् द्राश्रौ ३, २, १८; लाश्रौ १, १०,१३.

बलवत्-त(म>)मा– -माम् आपमं १,१५,१†[n].

बलवत्-तर– -रः बृदे ५, १४; पाप्रवा ५,१६; आज्यो ७, १९; –रम् ऋप्रा १७,२१.

बलिष्ठ– -ष्ठम् निसू ९, ७ : १५; आग्निगृ २,७,६ : ३७[2].

बलिष्ठ-त(म>)मा– -मया वैताश्रौ २०,२१.

बलीयस्– -यः आपश्रौ २१,१, २०; २४,३, ४६; ४७; १४, ६; बौश्रौ; आपमं २,२,११†[o]; शांगृ २,१,२९†[o]; पागृ २,२,११†[o]; आग्निगृ १, १, २ : ४०†[o]; बौगृ २, ५, १६†[o]; भागृ १, ६ : ११†[o]; वागृ ५, ९†[o]; –यसे दंवि १, ७†; –यांसः कौसू ७६, ३०; –यांसम् बौश्रौ २७,११ : १०; लसू ३,११ : ३१; –यांसि भाश्रौ ६, १६,३; –यांसौ भाश्रौ ६, १६, २; हिश्रौ ३, ८, ३८; –यान् आश्रौ १,१, २२; ५, ६; आपश्रौ.

बलीयसी– -सी आपध १, ४, ८; हिध १, १, १२७; –स्या वैताश्रौ २०,२१.

बलीयस्-त्व– -त्वम् पावा ३,१,६७; ७,१,१.

बल-वर्तिन्– -र्ती या ९,१०.

बल-वित्त– -त्तयोः बृदे ३,६१.

बल-विशेष– -षेण आपध २, १०, १६; हिध २,४,१६.

बल-सामर्थ्य– -र्थ्यम् याशि २, १०७; नाशि २,८,२१.

a) वैप १ द्र. । b) पामे. वैप २,३खं. बलम् माश ११,४, ३,७ टि. द्र. । c) पामे. वैप १ वनम् कौ ३, १,३ टि. द्र. । d) सपा. पागृ २, २,११ बलीयः इति पामे. । e) पामे. वैप १, १६९६ o द्र. । f) =धान्य-राशि- । =वंशबन्धन-रज्जु- इति (पक्षे) रुद्रदत्तः । g) पामे. वैप १,२२६६ n द्र. । h) पाठः ? यनि. शोधः (तु. C.) । i) पामे. वैप २,३खं. बलसात् मंत्रा २,४,६ टि. द्र. । j) बस. । k) पामे. वैप २, ३खं. बलभृत् मंत्रा २,४,६ टि. द्र. । l) पामे. वैप १, २२६८ b द्र. । m) °मद्भिः इति पाठः? यनि. शोधः (तु. सप्र. मै २,९,१) । n) पामे. वैप १,२२६६ q द्र. । o) पामे. पृ १३५३ i द्र.

बलात्-कार- -रम् विध ५,१८४.
बलात्कारो(र-उ)पभु(क्त>)
क्ता- -क्ता वाध २८,२.
बला(ल-अ)बल- -लम् अप ५८[१],
१,७; माशि ७, १; आज्यो ७,
२२; -लानि आज्यो ७,२३.
बलिन्- पा ५,२, १३६; -†लिनः
आपमं १,९,२; मागृ १,१४, ८;
दंवि २,४; -लिनम् सु ८,१०; ३१,
७; -लिनौ बौश्रौ १८,४५:१८;
-ली वृदे ६,११४; दंवि १,७†.
बल्लल- पावा ५,२,७;१२२.
१बल्य[a]- -ल्यम् द्राग १४,२,१०.
२बल[b]- -लः आज्यो १, ९; -लेन
आज्यो २, ११.
३बल- (>बल-कुण-) कुवल- टि. द्र.
४बल- वल- द्र.
५बल- (> बल-स-, २बल्य- पा.)
पाग ४, २,८०[२].
६बल[c]- -लः या ९,१०[d]; दंवि २,१०?
बलका[e]- -का याशि १,७१; -काम्
याशि १,७१.
बल-काम- प्रमृ. १बल- द्र.
बलक्ष[f]- -क्षम् आपश्रौ २०, १३,१२;
बौश्रौ १५, २३:७; २६:८;
लाश्रौ ८, ६,१६.
बलक्षी[f]- -क्ष्याः आपश्रौ १०, २६,
१२; भाश्रौ १०,१७,१८.
बल-क्षोभ- प्रमृ. १वल- द्र.
बला[g]- -ला अप ५,१,५.
बलाक,का[f]- पाउ ४, १४; पाग ४,
१,९६; ५,२, ११६; -कः शंध
३७७:२०; -का विध ४४,
२५; -काः शंध ४२६.

बालाकि- पा ४,१,९६.
बलाका-वत्-, बलाकिन्- पा ५,२,
११६.
बलाया[h]- -या नाशि १,२,९.
†बलास[i]- -सम् दंवि १,६; -सस्य
अप ३२,१,७.
बलास-देवता->°त्य- -त्यम् अअ
६,१४.
बलाह- (>बालाहक- पा.) पाग ४,
२,८०.
ब[ा,व[1]]लाहक[j]- पाग ६,३,१०८;
-†कः अप ४८,१००; निघ १,
१०; -कैः अप ६१,१,१५.
१बलि[k]- पाउ ४,१२४; -लयः आपगृ
८,४; भागृ; -लिः आपश्रौ १६,
३२, ४†; वैश्रौ; -लिना आपश्रौ
१३,२२,५†; †बौश्रौ ४,११:
९;१४; वैध १,४, ४; -लिभिः
कप्र २,४,८; अप ७०[२], १६,२;
-लिम् बौश्रौ १७, ४४:७†;
आपमं; -ली जैगृ १, २३:
२; -लीन् द्राश्रौ १२, १, ६;
लाश्रौ ४,९,४; आगृ; -लीनाम्
आपध २, ३, १५; १८; हिध
२,१,४६; ४८; -लेः आगृ २,
१,१०.
१बालेय- पा ५,१,१३.
बलि-कर- पा ३,२,२१.
बलि-कर्मन्- -र्म पागृ २, १७, १७;
वैगृ ७, ६:१२; जैगृ २, ९:१;
कप्र; -र्मणः कप्र २,४,६; -र्मणा
कौगृ १,६,७; शांगृ १, १०, ७;
-र्मणि कप्र १,५,२.
बलिकर्म-समन्वित- -तम् कप्र
२,९,३.

बलि-तन्त्र- -न्त्रम् गोगृ १,४,२३;
२४.
बलि-दान- -नम् वैगृ ४, २:७;
५,१०:६××; कप्र २, ३, ११;
गौध १०,२३.
बलिदान-प्रदाना(न-अ)र्थ-
-र्थम् कप्र २,३,११.
बलि-दैवत- -तानि द्रागृ १,५,३३.
बलि-निर्वपण- -णम् वैगृ ५, ११:
८.
बलि-निर्वापण- -णम् वैगृ ७, ३:
१०; ७:१.
बलि-पुष्पो(ष्प-उ)पहार- -रैः अप
७०,७,५.
बलि-प्रि(य>)या[1]- -यासु विध
९९,२१.
बलि-भोजिन्- -जिनः आग्निगृ २,
४,८:८.
बलि-मत्- -मतः काश्रौसं ५:
१५; -मते काश्रौसं ३:५†;
५:१५; १६†; -मान् अशां
१५,३†.
बलि-मन्त्र- -न्त्रः भागृ ३,१२:१;
-न्त्रस्य आपगृ १९,४.
बलि-रक्षित- -ताभ्याम् पावा २,
१,३६.
बलि-वर्जम् कप्र ३,९,१२.
बलि-विधि- -धिम् आग्निगृ २, ४,
८:१.
बलि-शेष- -षम् वैगृ ३, ७:२३;
गोगृ १,४, १२; -षस्य कप्र ३,
९,७.
बलि-स्थान- -ने वैगृ ५,७:१०.

*a*) विप. (अवसान- [निवास-स्थान-]) । तद्धितः यत् प्र. । *b*) =मुहूर्त्त-विशेष- । *c*) अर्थः व्यु. च? । *d*) अ-बलः इत्यस्य उप. इति स्क. । *e*) =ऊष्मवृत्ति-विशेष- । *f*) वैप १ द्र. । *g*) =ओषधि-विशेष- । *h*) =मूर्च्छना-विशेष- । *i*) निघ. पाठः । *j*) =मेघ- । *k*) वैप १,२२६७ p द्र. । *l*) बस. ।

बलि-हरण(बप्रा.)[a]- -णम् बौश्रौ २४, ४ : ३[b]; आगृ १, २, ३; पागृ; बौगृ १, १, १[b]; १०[b]; ११,१[b]; २,८,१[b];९,२६; ४,९, २[b];वैगृ; -णस्य वागृ १७,१९; गोगृ १, ४, २७.

बलिहरणी- -णीम् आगृ २, १,२.

बलिहरणा(ण-अ)नुकृति[c]- -तिः बौगृ ३,९, १; १०, १; -तीनि बौगृ ३,७,२९.

बलि-हार[a]- -रः मागृ २,१६, ३†.

†बलि-हृत्[d]- -हृतः बौश्रौ ३,१६ : २७; माश्रौ ४, ९, २; मागृ २, ८,४; कौसू ३,१.

बल्य(लि-अ)न्त- -न्ते कप्र १, ९,७.

बल्य(लि-अ)र्थ- -र्थम् विध ३,२२.

बल्या(लि-२आ)द्य[c]- -द्याः अप ३६, ८,२.

बल्यु(लि-उ)पहार- -रैः अप २१, ६,६; ६८,५,२१.

२बलि[e]- (>२बालेय- पा.) पाग ४, १,१३६.

बलिन्- १बल- द्र.

बलि,ली]वर्द[l]- फि ६४ -†र्दः बौश्रौ ३, २३ : ८; २६, ११ : १९[g]; भाश्रौ ५, ८, १४; शंध ३७७ : १६; -र्दम् बौश्रौ २५, ३० : १; माश्रौ १०, १९, १३; हिश्रौ ७,३,१४; -र्दाः कौगृ ३, १०,३५; शांगृ २,१६,४; -र्दान् आपश्रौ १६, १८, ३××; वैश्रौ; -†र्दाय[g,h] आपश्रौ २०,२१,६; बौश्रौ १५, ३५ : ७; २६, ११ : १७.

बलिष्ठ-,बलीयस्- १बल- द्र.

बलीवर्दि[e]- (>बालीवर्दिनेय-) पाग ४, १,१२६.

बलीवर्दिन्[l]- (>बालीवर्देय- पा.) पाग ४,१,१२३.

बलीवर्दी[l]- (>बालीवर्दिनेय-)

बलूक- वलूक- द्र.

बलूल- १बल- द्र.

बल्कश,स[r]- -शस्य बौश्रौ १७, ३६ : ५; -सम् आपश्रौ १९, ४,८.

बल्व[,व[i]]ज[d]- पाउभो २, २, ९२; पाग ४, २,८०;३,१४२[k]; ५,१, ५०;-†जम् कौसू ७८,३[2]; अप्रा ३,४,१; दंवि २,२; -जस्य अप २३, १, ५; -जान् आपश्रौ १९, १९, ४; बौश्रौ; -जानाम् बौश्रौ २३,२ : ९.

बाल्वज- -जम् काश्रौ २६,२,८.

बाल्वजी- -जी काशु ७,१३; -ज्या हिपि १३ : ९.

बाल्वजिक- पा ४, २, ८०; ५, १,५०.

बल्वज भार->बाल्वजभारिक- पा ५,१,५०.

बल्व[,ल्व]ज-मय- पा ४, ३, १४४[2].

बल्बूथ[d]- -थे शांश्रौ १८,१४,५†.

बल्बूल[l]- -लः सु २३,३.

१बल्य- १बल- द्र.

२बल्य- ५बल- द्र.

बल्लभ- वल्लभ- द्र.

√बल्ह् पाधा.भ्वा.आत्म. प्राधान्ये; चुरा. उभ.भाषायाम्.

बल्हिक[d]- -कान्[m] दंवि २,६†?.

बव[n]- -वम् आज्यो ४, २; ५; -वस्य आज्यो ५,१६; -वेन आज्यो ५, २.

ब[,व[k]]ष्कय[d]- पाग ४,१,८६; -ये दंवि २,९†.

बा[,वा]ष्कय- पा ४,१,८६.

बष्कयणी- पा २,१,६५.

१बस्त(बप्रा.)[d]- पाउभो २,२, १३०; -स्तः काश्रौ ८, ९,१[p]; आपश्रौ १७, १, ८†; बौश्रौ १०, ३८ : १८†; वाधूश्रौ; -स्तम् आपश्रौ १८, २१, ७; बौश्रौ; -स्तस्य आपश्रौ १६, २७, १२; १८; बौश्रौ; -स्तान् काश्रौ १४, ८, १३; -स्ते बौश्रौ २, ५ : ४†; -स्तेन शांश्रौ १५, १२, ३; अप्राय ५,६.

बास्त- -स्तम् वैगृ २, ४ : ४[q]; -स्ते वैश्रौ १७, १५ : १०.

बस्त-चर्मन्- -र्म लाश्रौ ८,११,२२; -र्मणा काश्रौ १४, ५, १७; -र्मणि काश्रौ १४, ५,१५; १८, ५,१२; हिश्रौ १२,६,९.

बस्त-पूर्व-पर[r]- -रः भाशि ६४.

बस्ता(स्त-अ)जिन[d]- -नम् आपश्रौ १८,५,२१; बौश्रौ ११,१,२××; माश्रौ; -ने आपश्रौ १७, १९, ६××; बौश्रौ.

a) =बलि-दान-। b) पाकयज्ञ-संस्था-। c) वस.। d) वैप १ द्र.। e) व्यप.। f) वैप २, ३खं. द्र.। g) °लि° इति पाठः। h) =परिवत्सर- इति तैब्रा [३,८,२०,५], C. [पक्षे] चन्द्र- इति। पभि. वैप १,२२६८ f द्र.। i) °वर्दी- इति पाका.। j) भाण्डा. प्रभृ. पाठः। k) तु. पाका.। l) =सर्प-विशेष-। m) °कानि इति पाठः? यनि. शोधः (तु. संस्कर्तुः टि., शौ ५,२२,७ च)। n)=करण-विशेष-। o) पाका. पाठः। p) तु. चौसं.। व° इति अच्यु.। q) °स्तवम् इति पाठः? यनि. शोधः। r) बस.>द्वस.।

**२बस्त**[a]– (>बास्तायन– पा.) पाग ४,१,११०.
**बस्त-वासिन्**[b]– -सिनः दंवि १, ९†.
**१बस्ति**[a]– पा, पाग २,४,६३.
**२बस्ति**– वस्ति– द्र.
**बहिस्** (:, र्, श्, ष्)[b]– -हिः आश्रौ ८,१४,३; १०,८,२; शांश्रौ; पा २, १, १२; बहिःऽ-हिः काश्रौ १६,२,२३.
बाहीक– पावा ४,१,८५.
बाह्य, ह्या[b]– पावा ४, १, ८५; –ह्यः कौसू ७६,९; आशि[c] ३,२; ४, १; ११; –ह्यम् बौश्रौ २५, १ : १६; भाश्रौ; आशि ८, २६[c]; –ह्याः आपश्रौ २१,९, ३; २४, २, १३; वाश्रौ; –ह्यानाम् विध १६, १८; –ह्यानि बौगृ २, २ : १३; –ह्याम् आपश्रौ १६, ३२, २; १९, ११, ६; †हिश्रौ ११, १,२६;२३,२,६;–ह्याम्ऽ-ह्याम् आपश्रौ १६,३,१;३२,१; वैश्रौ; –ह्यायाम् आपश्रौ १९, १२, १; हिश्रौ २३, २, १२; –ह्ये काश्रौ २६,७, १८; आपश्रौ ७, ३, ८; अप; –ह्येन[d] काश्रौ १८, ३, ६; बौश्रौ; –ह्येषु आपध १,९, १८; हिध १,३,१८.
बाह्य-तस् (:) शांश्रौ १४, १३, ४; आपश्रौ २, ४, ५××; बौश्रौ.
बाह्यतो-लोमन्[e]– -म्ना शांश्रौ १७,३,५.
बाह्य-वाच्[e]– -वाक् माशि १२,५.
बाह्य-विशे(ष>)षा[e]– -षाः आपशु २०, ५; ९; १४; हिशु ६, ४३; ४९; ५४?[f]; –षाभ्याम् आपशु २०, ८; हिशु ६, ४८; –षे आपशु २०, ५; हिशु ६,४५.
बाह्य-सविशे(ष>)षा[e]– -षे बौशु १४ : ३.
बाह्य-हुत– -तम् कौगृ १,६, ७; शांगृ १,१०,९.
बाह्यां(ह्य-अं)स[e]– -सः गोगृ १,२,२०.
बाह्या(ह्य-अ)ङ्गुष्ठ[e]– -ष्ठम् माशि २,१.
बाह्या(ह्य-अ)भ्यन्तर-मध्य-तस् (:) अप ६३,४,१०.
**बहिः-कक्ष**[e]– -क्षः शंध २२६.
**बहिः-परिधि**[b]– -धि आपश्रौ ९,२, ९; १६,१××; बौश्रौ.
**बहिः-पूर्व**[e,g]– -र्वः जैश्रौका १२१.
**बहिर्-अङ्ग-लक्षण—त्व**– -त्वात् पावा १,१,४७; २, ४७; ३, १, ३××.
**बहिर्-आञ्जन**[h]– -नम् बौश्रौ ९,११: १५; वैश्रौ १३,१३ : १३?[i].
**बहिर्-उपसत्क**[e]– -त्कः बौश्रौ २५, २८ : २२; –त्कम् बौश्रौ २५, २८ : २०.
**बहिर्-ऋच**[j]– -चम् निसू ३, ११ : २१.
**बहिर्-ग्राम**[j]– -मे अप ३३,४,३.
बहिर्ग्राम-निवसन– -नम् विध १६,१४.
**बहिर्-जानु**[e]– -नुः वौध १,५,१५.
**बहिर्-जानु-कर**[k]– -रः शंध २२६.
**बहिर्-ज्योतिस्**[e,d]– -तिः वाधूश्रौ ३,२५ : १; ५.
**बहिर्-णि(<नि)धन**[e,l]– -नम् निसू ४,७ : २२; –नस्य निसू ४,७ : २८; –नानाम् निसू ४,७: २५; –नानि निसू २, ३ : ३;५;१०.
बहिर्णिधन-स्थान– -ने निसू ४, ७ : २३.
**बहिर्-द्वार**– -रे वागृ २,११.
**बहिर्-धा** वाधूश्रौ ४, २३ : ४; शुप्रा ५,२०†.
बहिर्धा-भाव– -वात् काश्रौ ९, १,८.
**बहिर्-निर्बाध**[e]– -धम् वैश्रौ १८, ७ : २९[m]; –धान् आपश्रौ १६, १०,९[m].
**बहिर्-भस्मन्**[j]– -स्म माश्रौ १,२, ३, २.
**बहिर्-भाग**– -गम् निसू ३,५ : १; २; ४;६; ६ : २३.
**बहिर्-मण्डल-(स्थ>)स्था**[n]– -स्थाभिः शांगृ ६,२,९.
**बहिर्-योग**– पाग २, ४, ६३[a,o]; –गेण पावा १,१,३६.
बहिर्योगो(ग-उ)पसंव्यान– -नयोः पा १,१,३६.
**बहिर्-लोम**[p]– पा ५, ४, ११७; –मम् वैश्रौ १२, ८ : ७; –माभ्याम् आपश्रौ १०,८,१२.
**बहिर्-लोमन्**[q]– -म आपश्रौ १७,

*a*) व्यप.। *b*) वैप १ द्र.। *c*) =बाह्य-प्रयत्न-। *d*) वा. क्रिवि.। *e*) वस.। *f*) वा° इति पाठः? यनि. शोधः। *g*) =वहिष्पवमान-। *h*) तु. पृ २१६ t। *i*) °रञ्ज° इति पाठः? यनि. शोधः (तु. बौश्रौ.)। *j*) अस.। *k*) वस. >द्वस.। *l*) उप. =सामभक्ति-। *m*) पाभे. वैप १, २२६९ o द्र.। *n*) अस. > उस.। *o*) अहिर्योग– इति पाका.। *p*) वस. (तु. वैप १, २३४ d)। *q*) तु. पृ २१९ l।

२६,१४?[a]; आपध १,२८, १९; २१; हिध १,७,५४; ५७; -स्त्रा बौश्रौ २१,१२ : २१; हिश्रौ ७, ३,५; -स्त्री काठश्रौ ७६.

बहिर्-विघ[b]- -घम् आपश्रौ १६, २०, ५; वैश्रौ १८, १६ : २२; हिश्रौ ११,६,५२.

बहिर्-विराज[c]- -जम् बौश्रौ २४, ३३ : ९;१२.

बहिर्-विशसन[c]- -नम्[d] भाश्रौ १, २१, १; वैश्रौ ४, ६ : ९; १२, १९ : २३; हिश्रौ १,५,४२.

बहिर्-वेद- -दे आपध १,१३, १२; हिध १,४,२६.

बहिर्-वेदि[e]- -दि आश्रौ १, १२, ४; ४,८,२८××; शांश्रौ.

बार्हिर्वेदिक[f]- -कानि काश्रौ २२,१,४०.

बर्हिर्वेदि-सद्- -सदः आश्रौ १२,८,२०.

बहिश्-शौच[g]- -चम् बौध १,५,४.

बहिः-शर्कर[h]- -रात् बौश्रौ १०, २५:१७××.

बहिः-शाला[g]- -लायाः वागृ २, १४;११; -लायाम् शांगृ १,५, २; पागृ १,४,२.

बहिष्-कर्मन्[g]- -र्म शांश्रौ ७,७,४; १७,१३.

बहिष्-टात् भाश्रौ ७,८,१२; वाधूश्रौ ४,७८ : ३.

बहिष्टाद्-विशसन[c]- -नम्[d] आपश्रौ १,१९,३; १०,२७,१०; १९,२७,११.

बहिष्टान्-निर्बाध[e]- -धम् हिश्रौ ११,३,२६?†[i].

बहि-(स्थ>)ष्ठ[j]- -ष्ठः हिपि २० : ४; -ष्ठे हिश्रौ ४,२,५७[k].

बहिष्-पत्नीसंयाज[h]-त्व- -त्वात् लाश्रौ १०, ३, १.

बहिष्-पद-लक्षण[l]- -णे पावा ८, २,६.

बहिष्-परिधि[e]- -धि आश्रौ १,१२, ३४; ३,१३,१६; काश्रौ १९,३, २०; काश्रौसं.

बहिष्-पल- बर्हिष्पल- टि. द्र.

बहिष्-पवमान[e]- -नः आश्रौ १०,३, ११; शांश्रौ९,२१,१××;आपश्रौ; -नम् आपश्रौ १४, २६,३; २०, १३, ४; बौश्रौ; -नस्य माश्रौ २,३,६,८; लाश्रौ; -नात् आश्रौ १,४,२; आपश्रौ; -नाय काश्रौ २०,५, ३; आपश्रौ; -ने शांश्रौ ५,१०,३५××; बौश्रौ; मीसू ५, ३,५७[m]; -नेन शांश्रौ ६, ८,३; वाधूश्रौ.

बाहिष्पवमानीय[n]- -यम् जैश्रौ १३ : ७.

बहिष्पवमान-देश- -शः शुअ १,३४२; -शम् वैश्रौ १४, १३: ४.

बहिष्पवमान(न-ऋ)र्च्- -नर्चः द्राश्रौ ४,१,१०; लाश्रौ २,१,९.

बहिष्पवमान-वत् आपश्रौ १३, २,७.

बहिष्पवमान-संयोग- -गः लाश्रौ ७,११,२२.

बहिष्पवमान-समाधि- -धये निसू ७, ६ : १४.

बहिष्पवमान-स्तोत्र- -त्रम् वैश्रौ १७, ६ : ७.

बहिष्पवमाना(न-आ)स्ताव- -वम् आपश्रौ ११, १४, १०; १२, १९,७.

बहिष्-पिण्ड[c,o]- -ण्डम् काश्रौ १६, ५,१.

बहिस्-तन्व[c,p]- -न्वम् बौशु ६:९†.

बहि-स्प(न्या>)न्य[q]- -न्यम् बौशु २ : १५;१९.

बहिस्-संध्य-त्व- -त्वम् गौध २, १६.

बहिः-सदन[h]- -नम् वैश्रौ १५,२३ : १९.

बहिः-सदस्[r]- -दः शांश्रौ १७,४,२.

बहिः-सदस[r]- -सम् बौश्रौ ७,१० : १३; ११, ४××; वैश्रौ.

बहिः-स्नायिन्- -यी विध ८९,३.

बहिः-स्वार[s]- -रम् क्षुसू ३, १० : ९; १७; ४४; ४५; निसू ६,८ : ४२; ८,६ : ४७; -रस्य क्षुसू ३, १० : ९; १७.

बहु[e]- पाउ १, २९; पा ६, २, ३०; पाग ४, १, ४५; ५, १, १२२; -हवः आश्रौ १, ११, १†; ३,

---

*a*) °मः इति पाठः? यनि. शोधः (तु. संस्कर्तुः टि.)। *b*) पृ २२० h द्र.। *c*) बस.। *d*) सपा. बहिर्विशसनम् <>बहिष्टाद्विशसनम् इति पाभे.। *e*) वैप १ द्र.। *f*) तत्रभवीयः प्र.। *g*) मलो. कस.। *h*) अस.। *i*) बहिष्ठनि° इति पाठः? यनि. शोधः (तु. वैप १,२२६९ o पाभे.)। *j*) उस. पूप. विसर्गलोपः (पावा ८, ३,३६)। *k*) =बहिर्भाग-। बहिष्टात् इति मूको.। सप्र. आपश्रौ ७, १०,११ मूलम् इति पाभे.। *l*) मलो. कस. > बस.। लक्षणशब्देऽवयवार्थके सति (तु. कैयटः) उप. षस.। *m*) तु. जीसं.। *n*) इदमर्थे छण् प्र. उसं. (पावा ४,२, १३८)। *o*) उप. =बुद्बुद- (तु. विद्याधरः)। *p*) उप. पृ ११६० b द्र.। *q*) पृ २२० t द्र.। *r*) अस. पाक्षिकः समासान्तष् टच् प्र. (पा ५,४,१०७)। वा. क्रिवि.। *s*) नाप.। बस.।

१,१०××; शांश्रौ;–हु[a] आश्रौ२, १८,८; १०,८, ११‡; ‡शांश्रौ १२, १६, १; १६, ४, ४[b]; ६; १७,१७,१[२]; काश्रौ; –हुः शांश्रौ १०,१४,२; काश्रौ; आपश्रौ ६, २७, ३‡[c]; कौगृ ३, ४, ५‡?[d]; शांगृ ३, ७, २‡[c]; –हुनः या २,७; –हुना निसू १०,७:२९; –हुभिः वाधूश्रौ ३, ८८:१३; २१;–‡हुभ्यः आग्निगृ ३,५,२: १; बौपि १, २:१; बृदे ४, १०१$; या १०,२०; –हुम् वाश्रौ ३,२,१,२५; –हुषु आश्रौ २,१,६; काश्रौ ६, ३, १६; ८, २,३; बौश्रौ; पा १,४, २१××; –हून् शांश्रौ १६, ३, २८; आपश्रौ ६,२४,८‡[e]××; बौश्रौ; हिश्रौ ६,७,२‡[e];–हूनाम् आश्रौ २,१,६; शांश्रौ ९,२२,६; बौश्रौ; –हूनि कागृउ ३९:५; भागृ; या ७, ५;११,१६; २१; –होः शांश्रौ १७, १७,१‡; आपश्रौ; पा ५,४,२.

बह्वी– पा ४, १, ४५; –ह्वीः ‡आपश्रौ १,२, ९; ११, १××; बौश्रौ; –ह्वीनाम् आपश्रौ २०, १६,८‡[f]; बौश्रौ २४, ३१:८; हिश्रौ १४,३, ३१‡[f]; वाध; या ९, १४‡[f]; –ह्वीभिः आपश्रौ १३,१७,२; वैश्रौ; –ह्वीम् आपमं १,८,३; ११,७; –ह्वीषु बृदे १, ४४; –ह्व्यः बौश्रौ १५, ३:१; बृदे ३,८२; –ह्व्या वाश्रौ २, १, २, १२.

बहु-कर[g]– पा, पावा ३,२,२१.

बहु-कर्म–तम– -मः या ६,१३.

बहु-काम– -माः शांश्रौ १०,२१,१५.

बहु-कार– -०र काश्रौ १५, ७, १०‡[h].

बहु-कृष्णाजिन[i]– -नः या ३,१९.

बहु-क्रम– -मम् ऋप्रा ११, २०; –मे ऋप्रा ११,२५;३५.

बहु-क्षी(र>)रा[i]– -राः अप ५७, ३, ४.

बहु-गण° पा १,१,२३.

बहु-गामिन्– -मिनौ या १४,२३[२].

बहु-गुण[i]– पा, पाग ६, २, १७६; –णानि वौगृ १,२,३.

‡बहु-(गु>)गू[i]– -ग्वै आपश्रौ२०, ४,३; बौश्रौ १५,५:२०; हिश्रौ १४,१,३८.

बहु-ग्रहण– -णम् पावा ५, १, ३१; –णे पावा ५,३,२.

बहु-चारिन्– -री ऋअ ११,३(२)‡.

बहुचारिणी– -णी कौसू ३७,९.

बहु-छन्दोमान– पा, पाग ६, २, १७६.

बहु-ज– -जः या १४, २९[j];३१.

बहु-ज(न>)ना[i]– -नायाम् आपश्रौ १३,९,२.

बहु-जव[i]– -०वाः या १२,४३.

बहु-जात– -तः या १२,३६.

बहु-जाया– -याम् आग्निगृ ३, १०, ३:१;६.

बहु-ज्ञ– -ज्ञम् वाध ६, ३०; –ज्ञेन बौध १,१,१३.

बहु-तय– -यम् बौश्रौ ६, ६:२६; वाधूश्रौ ३, ७६:१५; १७; –यान् वाधूश्रौ ३,७६:१२;१८; –यानि वाधूश्रौ ३, ७६:११.

बहुतयी– -यीः वाधूश्रौ ३,७६: ११; १२; १८.

बहु-ता– -तया भागृ २,२८:४.

बहु-तिथ– पा ५,२,५२.

बहु-तो(य>)या[i]– -यासु विध ८५,६५.

बहु-त्रि– > °हुत्रि-वर्ष[k]– -र्षस्य लाश्रौ ८, ३,९[l].

बहु-त्व– -त्वम् बाश्रौ ३, २,६,४०; अप ६३, १, ४; विध ८,३९; बृदे १,१२; –त्वात् कप्र २, २, १२; –त्वे कौशि ११.

बहुत्व-श्रुति– -तेः मीसू ३,५, २६.

बहुत्वा (त्व-अ) भाव– -वात् पावा २,२,२९.

बहुत्वै(त्व-ए)कत्व–लक्षि(त>)ता– -ताः बृदे ३,३५.

बहु-दक्षिण, णा[l]– -णाम् अप ५४, २,४; ६४, १०, १०[३]××; –णेन माश्रौ ५,१,१,३७.

बहु-दस्यु[m]– -स्यवः शांश्रौ १५, २६, १.

बहु-दातृ–तर– -रौ या ६,९.

‡बहु–दास-पु(,पू[n])रु(ष>)षा[o]– -षायै आपश्रौ २०, ४,३; बौश्रौ

a) क्वचित् वा. क्रिवि. । b) पाभे. वैप १ (परि.) बहु मा २३, ३१ टि. द्र. । c) पाभे. वैप १, २२७० l द्र. । d) °हु इति पाठः? यनि. शोधः (तु. सपा. मा ३,४२ प्रमृ.) । e) पाभे. वैप १,२२७० n द्र. । f) पाभे. वैप १,२२७१ c द्र. । g) उप. टः वा अच् वा प्र. । h) पाभे. वैप १, २२४७ c द्र. । i) बस. । j) बहुजः शब्दो भवति इत्यस्य स्थाने दु. बहुशब्दा भवन्ति इति । k) विप. (साएड-) । बस. पूप. (विप. =ईषदपूर्ण-त्रित्व-विशिष्ट-) बहुच् प्र. तस्य च पुरस्ताद् योगः (पा ५,३,६७) । l) बस. उप. =२दक्षिणा- । m) =विश्वामित्र-सुत- । कस. । n) हिश्रौ. पाठः । o) बस. >द्वस. ।

१५,५ : २२; हिश्रौ १४,१,३८.

१बहु-देवत,ता[a]– -तः भाश्रौ ६,१५, ९; –ताः आपश्रौ २४, ३, ४३; बृदे १,७५; –ताम् शांश्रौ ३,६, १; –तायाम् या ११,११; १२, ३२; –ते मीसू ९,३, ४३; –तेषु काग्र ४७,११; बृदे ४,७.

२बहु-देवता->°वत्य,त्या– -त्यम् अअ १,२६; २, १३××; –त्या शुअ ४, २२; अअ ३, १६××; –त्याः अअ ३, २१; १९, ४३; –त्याम् शुअ ४, ३५; –त्ये अअ १,९; ३,१; ४,४; ६,१०४.

बहु-दैव[a]– -वे बृदे ३,४१.

बहु-दैवत[a]– -तः बृदे ६,८४; –तम् बृदे २, १२८; १३३; ३, ४३; चाअ ८ : २; या १२,४०; अअ ६,४१; –तेषु बृदे ३,१२८.

बहु-द्वार[a]– -रस्य बौध १,१,१३.

बहु-धा †आपश्रौ ७, ४, ५[b]; १७, १३, २; बौश्रौ; हिश्रौ ४, १, ६१[b]†; आपमं २,१,८†[c]; हिग्र २,६,१२†[c]; या ७,४;१८†××.

†१बहु-धान्य[d]– -न्यः आपश्रौ २२, १६,९; हिश्रौ १७,६, ३३.

२बहु-धान्य[e]– -न्यम् कौसू २०, ५†.

बहु-धार[f]– -रे या ५,२.

बहु-धी[a]– -धीः या ६,१३.

बहु-नामन्– -मानि निघ ३, १; या ३,१३.

बहु-निष्क[g]–, °नैष्किक– पावा ५, १,३०.

बहु-पक्ष्य(क्षि-अ)नावास[h]– -सम् वैश्रौ १,१ : ९.

बहु-प(त्रक>)त्रिका[i]– -काम् बौपि १,४ : ७.

बहु-पर्ण,र्णा[a]– -र्णः बौश्रौ ४, १ : १६; वैश्रौ १०, १ : १३; –र्णम् भाश्रौ ७, १ : ८; माश्रौ १, ८, १, ४; हिश्रौ ४, १, १५; –र्णा बौश्रौ १,१ : ९; भाश्रौ १,२,९; ७,९,९; –र्णाम् आपश्रौ १, १, ८××; भाश्रौ.

बहु-पर्ण-शाख,खा[j]– -खम् आपश्रौ ७, १,१७[k]; –खाम् आपश्रौ ७, १२,५.

बहु-पलाश,शा[a]– -शः निसू १,११ : १८; –शाम् वाश्रौ १,२,१,२.

बहु-पलाश-शा(खा>)ख[a]– -खम् वाश्रौ १,६,१,७[k].

बहु-पशु– -शुम् भाग्र १,११ : ११; –शू आपश्रौ २२, ६, ४; हिश्रौ १७,२,४९; –शोः पाग्र १, २, ३; गौध १८,२९.

बहु-पाद,दा[a]– -दाः ऋप्रा १७, ४; –दानाम् ऋप्रा १७, ४८; –दे आपध १,८,९; हिध १,२,९७.

१बहु-पुत्र,त्रा[a]– -त्रः भाश्रौ ४,२१, ८; वैश्रौ ७,१३ : १२; हिश्रौ ६, ४,२८; ६,१७; आपध २, १६, २०[l]; –त्रस्य शंध २८४; –त्राः माग्र १,१२,३†.

?बहुपुत्री[m]– -त्रीम् आमिग्र ३, ५,५ : ७[n].

बहु-पुष्ट[o]– -ष्टः आपश्रौ ५,१४,१; माश्रौ १,६,१, ६; हिश्रौ ३, ४, २३; गो १,२२; २,२४; –ष्टस्य माश्रौ ५,१,९,१६.

बहु-पूरुष[d]– -षन् कौसू २०, ५†.

बहु-प्रकार[a]– -रे बृदे १, १९.

बहु-प्रकृति[a]– -तिः पावा २,४,१२; -तौ शुप्रा ५, ७.

†बहु-प्रजस्[d]– -जाः या २, ८; पा. ५,४,१२३.

बहु-प्रधा(न>)ना[a]– -नाः बृदे ४, ८.

बहु-भक्ति-वादिन्– -दीनि या ७, २४†.

बहु-भा(र्या>)र्य[a]– -र्यस्य आपश्रौ १६, ४, ५; हिश्रौ ११, १, ४८; कप्र ३, १, ४.

बहु-भार्या– -र्यासु विध २६, १.

बहु-भाषिन्– (>बाहुभाष्य– पा.) पाग ५,१,१२४.

बहु-भोक्तृ– -क्तुः कप्र २,५,२.

बहु-भो(ग>)गा[a]– -गा आज्यो १३,१०.

बहु-मत्स्य[a]– -त्स्ये कौसू ४७,३७.

बहु-मध्य-गत– -तानि ऋप्रा १०, ८; उसू ४,७.

बहु-मन्त्र[a]– -न्त्रम् आपश्रौ २४,१, ४४;

†बहु-माष-ति(ल>)ला[i]– -लायै आपश्रौ २०,४,३;बौश्रौ १५,५ : २१; हिश्रौ १४,१, ३८.

*a*) बस. । *b*) पाभे. वैप १,२०४५ h द्र. । *c*) पाभे. वैप २,३खं. बहुधा तैत्रा २,७, १७,३ टि. द्र. । *d*) वैप १ द्र. । *e*) वैप १, २२७२ e द्र. । *f*) बस. (तु. वैप १ भूरिधारा–; वैतु. स्क., ⌊पक्षे⌋ दु. उस. इति)। *g*) तु. पाका. । *h*) कस.>बस. । *i*) =ओषधि-विशेष- । बस. । *j*) बस. >द्वस. । *k*) सपा. बहुपर्णशा° <> बहुपलाशशा° इति पाभे. । *l*) सपा. हिध २,५,२० बह्वपत्यः इति पाभे. । *m*) =ओषधि-विशेष- । स्त्री. ङीष् प्र. (पा ४,१,६३) । *n*) पाठः? °पत्रीम् इति शोधः (तु. सप्र. बौपि १,४ : ७ °पत्रिकाम् इति पाभे.) । *o*) कस. ।

बहु-मित्र[a]- -त्रः आपध २, १६, २०; हिध २,५,२०.
बहु-याजक- -कः शंध ३७७ : १४.
†बहु-याजिन्- -जिनः हिश्रौ २१,२, ५; गोगृ १,१,१६; द्राग १, ५, ५; विध ८२, १२; -जिनम् आग्निगृ २, ७, ११ : ११; -जिनाम् वाधूश्रौ ३, २४ : १३; -जी आपश्रौ ११, २०, ११; १२; बौश्रौ.
बहु-याज्य[b]- -ज्यस्य वाध १४,१७.
बहु-र[(=ल)][c]-> °र-मध्य- -ध्यम्[d] आश्रौ ५,१,१५†.
बहु-रथ[a]- -थः या ११,२३.
†बहु-रायस्पो(ष>)षा[a]- -षायै आपश्रौ २०, ४, ३; बौश्रौ १५, ५ : २२; हिश्रौ १४,१,३८.
बहु-रुद्र-देवता- >°त्य, त्या- -त्याः शुअ २, २५९; २६५; -त्यानि शुअ २,२६०.
बहु-रूप,पा[a]- -पः कौसू १२७,२; -पम् शांश्रौ १३,४, १; काश्रौ २५,१०,१; आपश्रौ ९,१९,१५; १४,२४,१; बौश्रौ; -पा आपश्रौ १३, २३, १२; कौसू १२६, ५; -पाः काश्रौ २०,४,२६; आपश्रौ ८, १३, १९; २०, १४, ७†[c]; १२†; १५, ३†[e]; बौश्रौ ५, ११ : १६; वाधूश्रौ ३, ३२ : ३; वैश्रौ ९, ५ : ५; †हिश्रौ[e] १४, ३,१६; १८[२]; आग्निगृ २,५,३ : २६†; बौगृ ३, ७ : १९; या ११, १७; -पाम् हिश्रौ ९, ६, १५; -पे अप ७२,१,४.
बहुरूप-क- -कैः अप ५४,२,५; ५५,१,६.
बहुरूप-त्व- -त्वम् बृदे ६,५५.
१बहु-ल,ला[f]- पाग ४,२, ७५; ५, १, १२२; १२३; १३३; -लः अप ६२, २, २; -लम्[g] शांश्रौ १५,१७,१†; १७, ६,५; काश्रौ २,७,२०; आपश्रौ २,९, २××; बौश्रौ; पा २, १, ३२; ५७××: -†ला आपश्रौ १६,१४,५;वाश्रौ २,१, ५, २०; वैश्रौ १८, १२ : १३; निसू २,१० : २२$;-लाः †आपश्रौ १, ५, ५; १२, ११; १४; भाश्रौ; -लान् अप्रा ३,४, १†[h]; -लानि सु २५,६; कौशि ३०; -लाम् शांश्रौ ४,१३,१†; आपश्रौ ६, ११, ५†; बौश्रौ; -लायाम् अप ५९,१, १२; -ले बौश्रौ ६,३० : २; तैप्रा ४,११; निघ ३,३०†[i].
बाहुल- पा ४,२,७५.
बाहुलक- पा ५,१,१३३.
बाहुल्य- पा ५, १, १२३; -ल्ये पा २,४,२२.
बहुल-तम- -मः वाधूश्रौ ४, ८४ : ११.
बहुल-ता- पा ५,१,१२३.
बहुल-तृण[a]- -णे काश्रौ २५,७, १५.
बहुल-त्व- पा ५,१,१२३.
बहुल-पर्ण[a]- -र्णम् काश्रौ ६,१, ८.
बहुल-पला(श>)शा[a]- -शाम् काश्रौ ४,२,४.
बहुल-वचन- -नस्य पावा २,१, ५८; ६,३,१३; -नात् पावा ८, ३,५९.
बहुल-वर्मन्[a]- -र्मा शांश्रौ ८, २४,१†.
बहुला(ल-अ)भिमान[a]- -नः हिश्रौ ९,२,२४†.
बहुलिमन्- पा ५,१,१२३.
बहुलौ(ल-ओ)षधि[a]- -धि बौश्रौ २५,५ : ३; बौपि ३,२,८.
बहुलौषधि-क- -कम् आगृ ४,१,१३.
बहु-वचन- -नम् या ४,३; १२,७; अप्रा १,२,१; २,२, ५[२]; शौच १, ७८; पा १,२, ५८; ४, २१; ८, १, ७४; -नस्य पा १,२, ६३; ८,१,२१; पावा १,२,५१; -नात् द्राश्रौ १२, ३, ६; मीसू ११,४, ५३; -नानि माश्रौ ५, २, ९, ४; -ने पा ४,३, १००; पा, पावा ७,३,१०३; ८,२,८१; -नेन या ११, १६; मीसू ११, १,३८.
बहुवचन-लोप->°लोपिन्- -पिषु पावा ४,१,१६३.
बहुवचन-विषय- -यात् पा ४, २,१२५; पावा ४,२,५२.
बहुवचना(न-अ)न्त- -न्तस्य पावा २,४,६२;४,१,८९; ८,२, ८१.
बहु-वत् आश्रौ ५, ४, ७; शांश्रौ; या २,२४[२]; २७; ११,१६; पा १,२,५८.
बहु-व(त्>)ती- -ती वाश्रौ ३,२, ६,३९.
बहु-वर्ष-द- -दः अप ३६, २२,१; ६५,३,३.

*a*) वस. । *b*) उस. उप. कर्तरि ण्यत् प्र. उसं. (पा ३, ४,६८) । *c*) वैप २, ३खं. द्र. । *d*) पामे. वैप २, ३खं. ऐत्रा २, २० टि. द्र. । *e*) पामे. वैप १, २०१८ f द्र. । *f*) वैप१ द्र. । *g*) क्वचित् वा. क्रिवि. । *h*) पामे. वैप १,२२७२ u द्र. । *i*) =द्यावापृथिवी- ।

बहु-वारि-भय- -यम् अप ५९, १, १२.
बहु-विक्षेप[a]- -पम् या ६,३३.
बहु-विद्[b]- -वित् आश्रौ ३, १२, १६; आपश्रौ ९,७,१;१०;९,६; माश्रौ; -विदः वौश्रौ १९,४:३६; -विदम् माश्रौ ५,२,१४, २२; -विदा शांश्रौ ३,१९,९; -विदे वैश्रौ २१,१:११.
बहुवित्-तम- -मः वाधूश्रौ ४, ८४:१२.
बहु-विध[a]- -धम् बृदे ५, ६३; कौशि ७०; -धाः वैध १, ८, १; कौशि २४; -धान् अप ६३, १,१; -धैः कप्र ३, १,१०; अप ६८,५,२२; ७०,८,५.
बहु-व्याल-मृग[c]- -गे शंध ४४३.
बहु-व्रीहि[d]- -हिः बृदे २,१०५; पा २,२,२३; पावा; -हेः पा ४,१, १२; २५; ५८; पावा; -हौ पा १,१,२८; २९; २, २, ३५; ५,४,७३;११३; ६,१, १४; २, १०६;१३८; १६२;१९७; पावा.
बहुव्रीहि-कृत-त्व- -त्वात् पावा २,१,२४.
बहुव्रीहि-ग्रहण- -णम् पावा ५, ४,६९.
बहुव्रीहि-निर्देश- -शः पावा ३, २,१११; ६,१,१; १८६;१९०; -शात् पावा ६, ३, ८१; -शे पावा ६,१,१.
बहुव्रीहि-प्रतिषेध- -धः पावा १,४,१; -धे पावा ४,१,७.
बहुव्रीहि-वत् पा ८, १, ९; पावा २,१,५१.
बहुव्रीहिवत्-त्व- -त्वे पावा ८,१,९.
बहुव्रीह्य(हि-अ)धिकार- -रात् पावा ४,१,५४.
बहुव्रीह्य(हि-अ)र्थ- -र्थम् पावा १,४,१.
†बहु-व्रीहि-य(व>)वा[a]- -वायै आपश्रौ २०,४, ३; वौश्रौ १५, ५:२१; हिश्रौ १४,१,३८.
बहु-शब्द- -ब्दान् द्राश्रौ ४,२, १९; लाश्रौ २,२,२७.
बहु-शस्(:) वैश्रौ २०, ३१:४; जैश्रौका १७७; कौसू.
बहु-शस्त्र-सङ्ग- -ङ्गः अप ७२, ३, १०.
बहु-शाख,खा[a]- -खः वौश्रौ ४, १:१६; वैश्रौ १०, ◦:१३; -खम् भाश्रौ ७, १, ८; माश्रौ; -खाम् आपश्रौ १,१,८; ९; माश्रौ.
बहु-शि(खा>)ख[a]- -खाः भागृ १, २८:३†.
बहु-शीर्ष[a]- -र्षाः अप ७०[२],४,४.
बहु-श्टङ्ग[a]- -ङ्गाः या २,७.
बहु-श्रुत[a]- -तः वाध ३, ९; शंध; -तम् वाध ६,४४; विध ५,१८९; -ताय वाध ३, ९; -तैः बौध २, १०,५७.
बाहुश्रुत्य- -त्येन बृदे ८,१३०.
१बहु-श्रुति[a]- -ति भाशि ७६.
२बहु-श्रुति- -तेः काश्रौ २४, ५, २२; द्राश्रौ १२, २, १७; लाश्रौ ४,१०,१८; मीसू ३,७,२६.
बहु-संवत्सर[a]- -रे शांश्रौ १३, २७, ५.
बहु-सदश- -शम् जुसू ३, ३:१३; ४:११.
बहु-सदशी- -श्यः क्षुसू ३,७:९.
बहु-संभा(र>)रा[a]- -राम् अप ७२,५,२.
बहु-सर्पिष्क[a]- -ष्कम् विध ८६,१८.
बहु-सर्व-ध(न>)ना- -नायै बौश्रौ १५, ५:२३†.
बहु-सुवर्णक[a]- -के काशु ७, २९.
†बहु-सूव(र>)री[b]- -री आग्निगृ २, १, ५:१९; ऋप्रा ५, २७; -रीः हिगृ १,१८,२.
बहु-स्वर[a]- -रस्य तैप्रा ४,४०.
बहु-स्वार[a]- -रः याशि १,८२[e].
†बहु-हस्ति(क>)का[a]- -कायै आपश्रौ २०,४,३; वौश्रौ १५,५:२२; हिश्रौ १४,१,३८.
बहु-हिरण्य,ण्या[a]- -ण्यः काश्रौ २२, ८,२५; -†ण्यायै आपश्रौ २०, ४,३; वौश्रौ १५,५:२१; हिश्रौ १४,१,३८; -ण्येन आपश्रौ २२, ९,१९; हिश्रौ १७,४,१४.
बहू(हु-उ)दक,का[a]- -का या ११, ४०; -काः वैध[f] १, ९, १; ३; या ५,६.
बहू(हु-ऊन>)ना- -नाः ऋअ १, ३,९; शुअ ५,९.
बहू(हु-ऊ)र्ज्[a]- -हूर्जि पावा ७, १, ७२.
बह्व(हु-अ)चर[a]- -रम् ऋप्रा १४, ४३.
बह्व(हु-अ)क्षरा(र-अ)न्त्य[g]- -न्त्यैः ऋप्रा ५,१२.
बह्व(हु-अ)च्- -ह्वचः पा २, ४, ६६××; पावा ६, ७,८२.
बह्वच्-पूर्वपद[a]- -दात् पा ४,

*a*) बस.। *b*) वैप १ द्र.। *c*) बस. > द्वस.। *d*) नाप. (समास-भेद-)। बस.?। *e*) सर्वो बहुस्वारः इत्यस्य स्थाने सपा. नाशि २, १,४ सर्वबहु° इति पाभे.। *f*) नाप. (वानप्रस्थ-विशेष-)। *g*) कस>बस.।

४,६४; पावा ६,१,८४.

बह्वज्-अङ्ग[a]- -ङ्गात् पा ४, २, ७२.

बह्वज्-अर्थ- -र्थम् पावा ४, १, ५४.

†बह्व(हु-अ)जा(जा-अ) वि(क>) का[b]- -कायै आपश्रौ २०, ४, ३; बौश्रौ १५,५ : २०; हिश्रौ १४, १,३८.

बह्व(हु-अ)ध्याय[a]- पा ६,२, १७६.

१बह्व(हु-अ)न्न[c]- -न्ने वैध २,१५,४.

बह्व(हु-अ)न्न,न्ना[a]- -न्नम् आगृ २, ७,९; -न्नाम् अप ७२,५,२.

बह्व(हु-अ)न्न-दक्षिण,णा[d]- -णः अप ७०[२],४,१; -णाम् अप ७०[२], १३,१.

बह्व(हु-अ)पत्य[a]- -त्यः आपध २, १६,१२; हिध २,५,१२; २०[e]; -त्यस्य शंध ७४; -त्याः वाश्रौ १,१,१,२३.

बह्व(हु-अ)भिधान[f]-ज- -जः ऋप्रा १३,२२.

बह्व(हु-अ)र्घ[g]- -र्घम् हिश्रौ ७, २, ६१†.

बह्व(हु-अ)र्थ-त्व- -त्वात् पावा २, ४,६२; मीसू ६, ७, २४; ११, १,४९.

बह्व(हु-अ)ल्पा(ल्प-अ)र्थ- -र्थस्य पावा ६,३,३४; -र्थात् पा,पावा ५,४,४२.

†बह्व(हु-अश्व>)श्वा[a]- -श्वायै आपश्रौ २०, ४, ३; बौश्रौ १५, ५ : २०; हिश्रौ १४,१, ३८.

बह्वा(हु-आ)कार[a]- -रः अप ५३,५, १.

बह्वा(हु-आ)ज्य[a]- -ज्याभ्याम् आपश्रौ २,५,११.

बह्वा(हु-आ)ढ्य-तर->°रा (र-आ) द्य(दि-अ)र्थ- -र्थः पावा २, १, ६९.

बह्वा(हु-आ)दि- -दीनाम् पावा १, १,२३.

बह्वा(हु-आ)प्- -ह्वापः वैध ३, ४, ११.

बह्वा(हु-आ)शिन्->°शि-दुर्भग- -गाः अप ६८,१,१०.

बह्वी(हु-ई)ति(क>)का[a]- -का अप ५९,१,६; १५.

बह्वृ(हु-ऋ)च्[h]- -ह्वृचाम् आग्निगृ ३, ७,४ : ९; बौपि २,३,१८[i].

बह्वृ(हु-ऋ)च[a]- -चः अप २, २, ४; ४, ३; ४; शंध २००; -चम् अप ३, ३, ३; अअ १९, १[j]; -चाः आपश्रौ ६, २७, २; १३, २४,१०; निसू १, २ : १४; २, २ : ८××; साअ २,६५६; शैशि ३३९; -चानाम् पागृ २, १०, १९; ऋअ ३,२; -चैः ऋअ ३, १४.

बाह्वृच्य- पा ४, ३, १२९; -च्यम् शांश्रौ १,१,१५.

बह्वृच-ब्राह्मण[k]- -णम् आपश्रौ १, २०,१०; ५,१५,१; ६, १३, ९; १५,१६; ३१,१३; ८,५,२; ११ २,१०; १२,१७,२; १८,८,७.

बह्वृच-वाजसनेयिन्- -यिनाम् आपश्रौ ८,१५,१२.

बह्वै(हु-ए)क-धातु-ज- -जम् बृदे २,१०३.

बह्वो(हु-ओ)षधिक[a]- -के कौगृ १, २१, २१; ?शांगृ[l] १, २८, २३; ४, ६, ३.

बहुकीट- (>बाहुकीट- पा.) पाग ४,२,११०[m].

१बहु-ल- बहु- द्र.

२बहुल[n]- -लः भागृ २, १५ : २; -लस्य अप ५०, ९, ५; -ले वेज्यो ९.

बहुला[o]- (>३बहुल- पा.) पा ४,३, ३४.

बहुलिमन्- बहु- द्र.

बहूदरि[p]- -रयः बौश्रौप्र ४३ : ५.

?बह्वे दंवि १,९†.

बाकायन- १बक- द्र.

बाड् वाट् द्र.

√बाड् पाधा. भ्वा. आत्म. आप्लाव्ये.

बाडव- बडवा- द्र.

√*बाढ् (<√बाह्) >बाढ[q]- पा ७,२,१८.

१बाण[r]- पाग २,४,३१[s]; -णः आपमं १,१२,९†; सु २३,२; कौगृ १, १२,६†; शांगृ १,१९,६†; हिगृ १,२५,१†; -णम् बौश्रौ २२, ५ : १०; जैगृ २, ९ : १२; कौसू ३५, ३; -णाः आगृ ३, १२, १९†; भागृ १, २८ : २†; अप

*a*) बस. । *b*) बस.>द्वस. । *c*) कस. । *d*) कस.>बस. उप. =२दक्षिणा- । । *e*) पाभे. पृ १७९९ l द्र. । *f*) =बहुवचन- । *g*) वैप १ द्र. । *h*) बस. उप. समासान्तस्य प्र. अभावः उसं. (पा ५,४,७४) । *i*) बह्वृचानाम् इति B. । *j*) अनध्येतर्यपि समासान्तः अः प्र. उसं. (पा ५,४,७४) । *k*) उप. =२ब्राह्मण- । *l*) बह्वौ° इति पाठः? यनि. शोधः (तु. कौगृ.) । *m*) बाहु° इति पाका. । *n*) =कृष्ण-पक्ष- । व्यु.? । *o*) =कृत्तिका-नक्षत्र- (तु. वापाभा.) । *p*) =ऋषि-विशेष- । *q*) तु. वैप १,४५६ c । *r*) वैप १ निर्दिष्टानां समावेशः द्र. । *s*) तु. पाका. । वारबाण- इति भाण्डा. प्रभृ. ।

७०[2],२१,५; ७१,१४,४; उनिसू ७ : ३१†; -णे दंवि १,५†.
बाण[,णा[a]]-प(र्ण>)र्णी[b]- -र्णीम् कौसू ३६,१९;३८; अअ ३,१८.
बाण-मुख- -खम् सु २३,१.
बाण-वत्- -वत् बौश्रौ १०, २३ : १७; २३; -वतः आपश्रौ १८, १४,११; वाश्रौ ३, ३, २, ३९; -वद्भिः शांश्रौ १४, २२, ११; बौश्रौ १८, २४ : ८; -वन्तः काश्रौ २२, १०, २५; आपश्रौ १८,१०,२७; २२,४,२२; माश्रौ ५,१,९,१८; हिश्रौ १३,४,१३; -†वान् तैप्रा ९,२१; १३,९.
बाणा(ण-आ)कार[c]- -रम् आग्निगृ २,५,१ : १८.
बाणौ(ण-ओ)घ- -घैः विध ४३,४२.
२बा[,वा[d]]ण[e]- -०ण द्राश्रौ ११, १, ५; ६; लाश्रौ ४, १,५;६; -णः आपश्रौ २१, १७, १०; बौश्रौ २३,११ : २८; हिश्रौ १६,६,९; तैप्रा १३, १२†; भाशि ६३†; -णम् आपश्रौ २१,१८,९; बौश्रौ १६, २० : ५; २१ : ५; वाश्रौ ३,२,५,२५; द्राश्रौ ११,१, १०; दंवि २,८†; -णस्य द्राश्रौ १०, ४,१५[2]; लाश्रौ ३, १२, १५[2]; -णेन काश्रौ १३,२, २५; हिश्रौ १६,६,१५.
बाण-भेरी-मृदङ्ग-गर्ता(र्त-आ)र्त[f]-शब्द- -ब्देषु गौध १६,७.
बाण-शब्द- -ब्दम् मागृ १, १०, ७†; -ब्दे कौगृ ३,९,२६; वाध १३, २१.

?बाणाकर्णी- ऋत ५,१,३.
बादर- प्रभृ. १बदर- द्र.
बादरायण- प्रभृ. २बदर- द्र.
बाद्धकायन-, बाद्धकि- १बद्धक- द्र.
✓बाध् पाधा. भ्वा. आत्म. लोडने, †बाधते आश्रौ ८,१०,३; शांश्रौ १०,११,९; १२, २४,२; आपमं १,१५,१; बाधन्ते शांश्रौ २, ८, ६†; जैगृ २, ६ : ११; आग्निगृ २,५,९ : १३; बाधसे आगृ ३, ७,१†; †बाधे शांश्रौ २, ८, ६; दंवि १, ८; बाधताम् मागृ २, १८, २†; †बाधन्ताम्[g] आपमं २,२२,११; भागृ २,३० : १५; हिगृ १,१६,७; †बाधस्व आपश्रौ ७, ६, ७; बौश्रौ ८, १९ : १५; वैश्रौ १०,६ : ३; बाधध्वम् बौश्रौ १२,९ : २३; अबाधन्त भाशि ५१†.
बाध्यते अप ७०[2], २, ४; मीसू ३, ३, ८; बाध्यन्ते अप ५१,५, १;२; विध ४३,४१.
बाध- -धः कप्र ३, ९, १६; अप ४८,१०३†[h]; निघ २,९†[h].
२बाधक- -कस्य पावा ३,१,९४.
बाधक-बाधना(न-अ)र्थ- -र्थम् पावा ३,३,४३;४४.
बाधक-विषय- -ये पावा ३,१, ९४.
†बाधमान,ना- -?नः[i] आपश्रौ १६, १६, १; वैश्रौ १८, १४ : ८; -नाम् मागृ १,१४,१६[j].

बाधित- -तम् कप्र ३,९,१६.
बाधित-त्व- -त्वात् पावा १,१, ४४.
बाधितुम् बृदे ७,५४.
बाध्य- -ध्यः आपध २,२६,१८;२८, १०; हिध २,५,२१३; ६,१०.
बाध्यमान- -नाः बृदे ७,५५.
१बाधक- प्रभृ. बधक- द्र.
२बाधक- ✓बाध् द्र.
?बाधकाशाधयेन[k] अप २४, १,६.
बाधकी- बधक- द्र.
†?बाधते[l] अप्राय ४,१.
बाधिरक- २बधिर- द्र.
बाधिरिक- बधिरिका- द्र.
बाधिर्य- ✓बध् द्र.
बान्धकायन-, °कि-, °किनेय-, °केय- बन्धक- द्र.
बान्धव- प्रभृ. ✓बध् द्र.
बान्धवायनि- ३बन्धु- द्र.
बान्धायनि- बन्धा- द्र.
बान्धुक्य[m]- -क्याः बौश्रौप्र १५ : २.
बान्धुपत-, बान्धुमैत्रिक-, बाबध्यमान- ✓बध् द्र.
बाभ्रव-, °व्य-, °व्यक- २बभ्रु- द्र.
बाभ्रुक- १बभ्रु- द्र.
बार्बर- प्रभृ. बर्बर- द्र.
बार्ह[m]- -र्हाः बौश्रौप्र ३ : ३.
बार्हत-, °र्हदग्न- प्रभृ. ✓बृंह् द्र.
बार्हस्पत्य- बृहस्पति- द्र.
†बाल्[n] आपश्रौ ९,१९,४; बौश्रौ १४, १४ : २२; वैश्रौ.
१बाल,ला[n]- पाग ५,१,१२२; १२३; १२८[o]; -लः कप्र २, २,९; अप

*a*) कौसू. पाठः । *b*) नाप. (ओषधि-विशेष-) । वस. । *c*) वस. उप. = २आकार- । *d*) आपश्रौ. हिश्रौ. गौध. द्राश्रौ. प्रभृ. पाठः । *e*) नाप. (वीणा-विशेष-) । *f*) गर्त- = रथ- इति भाष्यम् । *g*) पाभे. वैप १ (परि.) सुदन्तु शौ ६,१२४,२ टि. द्र. । *h*) = १बल- । *i*) वैप १, २२७४ v द्र. । *j*) पाभे. वैप १, १७८७ h द्र. । *k*) पाठः ? । °कसाधनेन इति संस्कर्तुः टि. । *l*) पाठः ? । सपा. ऋ १, २५,२१ जीवसे इति पासे. । *m*) = ऋषि-विशेष- । *n*) वैप १ द्र. । *o*) बा[,वा] लमन्द- इति पासि. ।

२,१,५[e]; शंध ३५६; विध ५४, ३३; या ६,३१;९,१०ф; –लन् वैगृ ३, २२ : ७; कप्र २,२, ९; –लस्य वैगृ ५, १० : १; अशां १७,५; शंध २३; याशि १,७४; –ला अप ७०[2],७,३; वाध १७, ७४; –लाः कौगृ ३, १०, ३५; शांगृ २, १६, ४; आग्निगृ २,५, ९ : ११; जैगृ २, ६ : ९; वृदे ४, १२०; –लान् कौगृ ३, १०, २४[a]; गोगृ ४,८,३१; अप ५३, २, ३; आपध २, ४, १२[b]; –लानाम् आग्निगृ २,४,६ : ४२; अप ६४,१०,२; ६५,२,९;७०[2], ८, २[3]; शंध ३००; ३०१; वौध ४,५,७; –ले आग्निगृ ३,७,४ : ३; बौपि २, ३, ८; शंध; –लेन वैगृ ६,५ : २; –लैः वौश्रौ २७, ११ : १६;१९; वाध ३,४५.

१बाल-क- -कान् विध ६८,२५.

बालक-प्रव्रजित-वृद्ध- -द्धेभ्यः शंध ७८.

बाल-कृत- -तम् वैगृ १,२१:१०ф.

बाल-ग्रह[c]- -हान् शंध ११६ : २६.

बाल-घ्न- -घ्नान् विध्र ५४,३२.

बाल-ज्येष्ठ[d]- -ष्ठाः पागृ २,९,१३.

बाल-तर- -रस्य शंध ३९२.

बाल-ता- पा ५,१,१२३.

बाल-त्व- पा ५, १, १२३; –त्वे अप ९,२,७; ३८,३,५.

बाल-देशान्तरित-प्रव्रजिता(त-अ) सपिण्ड- -ण्डानाम् गौध १४, ४२.

बाल-धन- -नः वाध १६, १८[e]; –नम् गौध १०, ४५; –नानि शंध ३००.

बाल-धूर्त[f]- -र्तम् विध ४८,२२[g].

†बाल-बन्धन[h]- -नः[i] आपमं २, १६,१; पागृ १, १६, २४; भागृ २,७ : ७.

बाल-भाव- -वात् वृदे ४,३.

बाल-मानस-ग—ध्वान्त->°न्त-विपाटन-पटीय(स्>)सी- -सीम् जैश्रौका ५.

बाल-वत्स- -त्सस्य याशि १,६९.

बाल-वृत्त- -त्तम् वौध ३,६,८[g,j].

बाल-वृद्ध- पाग २,४,४१[k]; –द्धान् वौध २, ७, १९; –द्धानाम् अप २२, १०, ४; ४१,३, ९; –द्धौ विध ५,१८९.

बाल-वृद्ध-मत्तो(त्त-उ)न्मत्तो(त्त-उ) पहतदेह-भाराक्रान्त-स्त्री-स्नातक-प्रव्रजित- -तेभ्यः शंध ८६.

बाल-वृद्ध-रोगार्त-श्रा(न्त>)न्ता- -न्तः(?न्ताः[l]) शंध १४५.

बाल-वृद्धा(द्ध-आ)तुर- -रेषु वाध २३,४३.

बाल-वृद्धा(द्ध-अ)नाथा(थ-आ)र्त-श्रान्त- -न्तान् वैध १,४,२[m].

बाल-व्याधिता(त-आ)र्त- -र्तैः विध ६३,१३.

बाल-स्त्री-धन- -नानि शंध ३००.

बाल-स्त्री-परिगत- -तानि शंध १६९.

बाला(ल-आ)कृति[d]- -तिः अप ५०,६,५.

बाला(ल-आ)तप- -पम् वैध ३, ३, १.

बालातप-सेवा- -वाम् विध ७१, ४६.

बाला(ल-अ)नाथ-स्त्री-धन- -नानि विध ३,६५.

बाला(ल-अ)र्क-बोधित-सरोरुह-गर्भ—गन्ध[n]- -न्धाः अप २४, ६,२.

बाला(ल-अ)र्क-वर्णा(र्ण—आभा>)भ- -भः अप २९,१,५.

बालिमन्- पा ५,१,१२३.

१बाल्य- पा ५, १, १२३; १२८; –ल्ये आग्निगृ २, ४, ५ : २३; अप ९,३,३; वौध ४,७,८; विध ९६,३४.

बाल्य-यौवन-वार्धक्य- -क्येषु विध २५,१३.

२वाल[o]- पाग ४,१,१५४.

बालायन[p]- -नाः वौश्रौप्र ३ : ८; ४७ : ३.

बालायनि- पा ४,१,१५४.

२बाल्य- -ल्याः वौश्रौप्र ७ : २.

३बालेय - -यः वौश्रौप्र ६ : १.

३बाल- १बाल- द्र.

२बालक- (>°क्य- पा.) पाग ४, २,४९.

वालखिल्य- वालखिल्य- द्र.

वालन्दन[o]- -नस्य चाश्र १६ : १६.

वालव[q]- -वम् आज्यो ४, ५; ५,३; –वस्य आज्यो ५, १६.

वालाकि- वलाक,का- द्र.

वालाहक- बलाह- द्र.

*a*) सपा. शांगृ २,१४,२१ कुमारान् इति पाभे. । *b*) पाभे. पृ ८८३ p द्र. । *c*) =[बालपीडक-] असुर-विशेष-। षस. वा उस. वा । *d*) बस. । *e*) मनुः ८, १५० °नम् इति । *f*) मलो. कस. । *g*) सपा. बालधूर्तम्<>बालवृत्तम् इति पाभे. । *h*) =बाल-ग्रह-। उस. । *i*) पाभे. पृ १४४६ l द्र. । *j*) °वृद्धम् इति मैस. । *k*) तु. पागम. । *l*) पाठः? यनि. शोधः । *m*) °द्धाननाथातर्ध्वश्रा° इति C. । *n*) कस.> तृस.>कस.>षस.>बस. । *o*) व्यप. । *p*) फक् प्र. उसं. (पा ४,१,९९) । *q*) =करण-विशेष- ।

**बालिश**[a]- पाउभो २, ३,१४७; पाग ५,१,१२४; -शस्य या ४,२०.

बालिश्य- पा ५,१,१२४.

**बालीवदिनेय-** बलीवर्दी- द्र.

**बालीवर्दिनेय-** बलीवर्दी- द्र.

**बालीवर्देय-** बलीवर्दिन्- द्र.

**१बालेय-** १बलि- द्र.

**२बालेय-** २बलि- द्र.

**बाल्वज-** प्रभृ. बल्वज- द्र.

**बाल्ही (,ह्वी)क**[b]- पा, पाग ५, ३, ११७; -काः अप १, ७, ८; -कान् अप ५०,२,४.

**†बाष्क**[c]- -ष्कान्[d] आपश्रौ २०, १४, १०; हिश्रौ १४,३,१७.

**बाष्कय-** बष्कय- द्र.

**बाष्कल**[e]- -लम् आगृ ३, ४,४; शांगृ ४,१०,३; -लाः बौश्रौप्र ८ : १; २१ : १; बृदे ८, ८५; चव्यू १ : ८[f].

बाष्कलक[g]- -कः ऋअ ३,२१; -के ऋअ ३,३६.

बाष्कलेय- -यः बौश्रौप्र ६ : २.

**बाष्प-** पाउ ३,२८.

√बाष्पाय पा ३,१,१६.

**बास्त-** १बस्त- द्र.

**बास्तायन-** २बस्त- द्र.

**√बाह्** पाधा. भ्वा. आत्म. प्रयत्ने.

**†बाहव**[h]- -वा आश्रौ ३,८,१; शांश्रौ ८,१२,८; ९,२०,२; काश्रौ.

**बाहवि-** २बाहु- द्र.

**बाहिर्वैदिक-,** °हिष्पवमानीय-, °हीक- बहिस्- द्र.

**१बाहु**[h]- पाउ १, २७; -†हवः कौसू १६,२१; ऋअ ११, ९; अपं ३ : ४८; ४ : २७; शुप्रा ४. ६४; दंवि १,१२; -†हुः आश्रौ १२, ९,७; शांश्रौ; -हुभ्याम् †आश्रौ १, १३, १; ३, १, १६; १७; शांश्रौ ४, ७, ५†; आपश्रौ; -हुम् शांश्रौ १,६,५†; ४,१२, १०†; १६, ७; आपश्रौ; या ४, २०†; ९, १५; दंवि १, ८†; -हुवोः आपश्रौ २०, १३, १२; २२,२८,९†; बौश्रौ; -हू आश्रौ ३,३,१†; ९,४; शांश्रौ ५, १७, ५†; आपश्रौ; -हून् माश्रौ ६, १, ३, ३०†[i]; वाश्रौ २, १, २, २९†[i]; द्राश्रौ ३, १,१०; लाश्रौ १, ९, ११; -†हौ आपश्रौ ७, १३, ८; १२, ११, १०; हिश्रौ; -ह्वोः शांश्रौ ४,१५,१३; काश्रौ; माश्रौ ५,२, १५,२०†[j]; वाश्रौ १,१,५, १९†[j]; वैश्रौ.

१बाहु-क[k]- -कः बौध २,३,४६[l].

बाहु-कर- पा ३,२,२१.

बाहु-गृहीत- -तम् कौसू ५५,१६.

†बाहु-च्युत[h]- -तः माश्रौ २, ४,३, २९[m]; हिश्रौ ९, ५,३६; वैताश्रौ १६, १७[m]; २४,१.

बाहु-छेद- -दे अप ६८,२,१०.

बाहु-दाक्षिण्य- -ण्यात् निसू ७,४ : १६; ५ : ५.

बाहु-द्वय- -यम् विध ९६,९०.

बाहु-नामन्- -म या ५,२५; -मानि निघ २,४; या ३, ८.

बाहु-प्रमाण- -णे वैश्रौ ११, ८ : ३.

बाहुप्रमाण-दण्ड[n]- -ण्डानि वैश्रौ १३,७ : १८.

बाहु-प्रशंसा- -सा मीसू ९,४,२३.

बाहु-बल- >°बलिन्- पावा ५,२, १३५.

बाहु-मात्र,त्रा- -त्रम् शांश्रौ १७,१, १०; माश्रौ; -त्रा कप्र १, ८, १२; अप २२,२,३; २३, ६,१; -त्राः आपश्रौ १५, ५, १३†; काठश्रौ; -त्रान् काश्रौ २, ८,१; ८, ५, १०; आपश्रौ; -त्रे माश्रौ २,२,३,३५; ४, ४; -त्रौ बौश्रौ २०,३ : १०.

बाहुमात्री- -त्री आपश्रौ ६, ३, ६; -त्रीम् काश्रौ १७, ४, १२; हिश्रौ ११, १, ११; -त्र्यः काश्रौ १, ३, ३८; आपश्रौ १, १५,१२; हिश्रौ १,४,३२; -त्र्या कौसू ४७,२४.

बाहुमात्रा(त्र-अ)न्तर[n]- -रान् माश्रौ २,२,४,४.

बाहुमात्रा(त्र-आ)याम- -मे वैश्रौ ११,७ : १०.

बाहु-मूल-सामान्य- -न्यात् या २,२.

बाहु-वीर- >°र्य[h]- -र्ये दंवि १, ९†; -र्येण बाध २६, १६.

बाहु-वृक्त[h]- -क्तः ऋअ २,५,७१.

बाहु-संज्ञक[n,o]- -कम् अशां १,५†.

?बाह्व(हु-अ)ङ्क[h]- -ङ्कैः दंवि १,९†.

---

*a*) =मूर्ख- । व्यु. ? <बलिश- इति अभा., <१बाल- + √शी इति स्क. दु. ⌊या.⌋ । *b*) =आयुध-जीविसंघविशेष- (तु. वापाभा ४६१) । *c*) =एकहायन-वत्स- इति ?संस्कर्तुः सूची । व्यु. ? । *d*) पाभे. वैप १, २२६८ g द्र. । *e*) व्यप. । *f*) =⌊ऋग्वेदीय-⌋ शाखा-विशेष-, तदध्येतृ- वा । *g*) विप. (⌊बाष्कल-शाखीय-⌋ कम-)। चरणेऽर्थे वुञ् प्र. उसं. (पा ४, ३,१२८) । *h*) वैप १ द्र. । *i*) पाभे. वैप १, २२७६ f द्र. । *j*) पाभे. वैप १,२२७६ d द्र. । *k*) तरत्यर्थे ठन् प्र. ( पा ४,४,७ ) । *l*) सप्र. मनुः ४, ७७ बाहुभ्याम् इति । *m*) पाभे. वैप १,१२६८ c द्र. । *n*) बस. । *o*) पूप. =आर्द्रा-नक्षत्र- ।

बाह्(हु-अ)न्त- -न्तात् पा ४, १, ६७.

२बाहु[a]- पाग ४,१, ९६; २, ८०[2b]; -हवः[c] बौश्रौप्र ४६ : २.

बाहवि- पा ४,१,९६.

बाहवि-गार्ग्य-गौतम-शाकल्य-बाभ्रव्य-माण्डव्य-माण्डूकेय- -याः आगृ ३,४,४.

२बाहु-क- पा ४,२,८०[2].

१बाहुक- १बाहु- द्र.

बाहुकीट- बहुकीट- द्र.

बाहुभाष्य- बहु- द्र.

बाहुमित्रायण[a]- -णः बौश्रौप्र ३ : १३.

बाहुल-, °लक- बहु- द्र.

बाहुलकि[a]- -कयः बौश्रौप्र १९ : १.

बाहुल्य-, बाहुश्रुत्य- बहु- द्र.

बाह्य,ह्या- वहिस्- द्र.

बाह्यकि[a]- -कयः बौश्रौप्र ३ : ४.

बाह्योग[a]- -गाः बौश्रौप्र १७ : २.

बाहृच्य- बहु- द्र.

√बिट् पाधा. भ्वा. पर. आक्रोशे.

बिठ[d]- -ठम् या ६,३०[e]ϕ; -ठे या ६, ३०.

बि[,वि[e]]डाल[f]- पाउ १, ११८; -लः पावा ३,२,८४; -लानाम् अप ६४,७,५.

बिडाल-नकुल-काक- -कानाम् सुध ४३.

बिडाल-मत्स्य-मज्ज[g]- -ज्जानाम् अप ६४,५,४.

बिडालो(ल-उ)लूक- -कयोः अप ६४,६,९.

बिडाल-काक-नकुला(ल-आ)खू(खु-उ)च्छिष्ट—भक्षण- -णे विध ५१,४६.

बिडाल-व्रत- > बैडालव्रतिक- -कः विध ९३, ८; -कान् विध ८२,५; -के विध ९३,७.

बि[,वि[h]]द[i]- पाग ४, १, १०४; ११०[j]; -दाः[k] बौश्रौप्र १ : ३; ४ : १; ४; ५ : ५; -दानाम्[k] आश्रौ १२, १०, ९; पा ४, १, १०४.

बै[,वै]द- पाग ४,१,७३; -०द बौश्रौप्र ४ : ५; -दः बौश्रौप्र ४१ : १०.

१बैदी- पा ४,१,७३.

बै[,वै[l]]द-त्रिरात्र[m]- -त्रः निसू ८.८ : २४; -त्रम् आश्रौ १०, २,१०; -त्रे द्राश्रौ ४, १, १६; लाश्रौ २,२,४; ९, ७, ८; निसू ३, ७ : ७; -त्रेण आपश्रौ २२, १८, ४; हिश्रौ १७,७,१.

बैद-स्वरसामन्[n]- -म्नोः वैताश्रौ ४१,४.

बै[,वै[o]]दायन- पा ४,१, ११०; -नाः बौश्रौप्र ४३ : ४.

बिद-वत् बौश्रौप्र ४ : ५.

बिदल[p]- > बैदल[q]- -लः आपश्रौ १९, ६,२; हिश्रौ २३, १, ११; -लम् आपश्रौ १९, ६,३; हिश्रौ २३,१,१२.

बैदल-क- -कान् बौश्रौ २१, २६ : ६.

√बिन्द् पाधा. भ्वा. पर. अवयवे.

बिन्द[r]- -न्दः या ६,३२.

बिन्दवि[s]- (>१बिन्दवीय-)

२बिन्दवीय- २बिन्दु- द्र.

१बिन्दु[t]- पाउभो २, १, १०; -न्दवः आपध १, १६,१२; बौध १, ५, ८९†; विध २३, ५४; हिध १, ५,११; -न्दुः आपश्रौ १३, ९, ९; वैश्रौ १६, ११ : ७;२६ : ५; आपगृ २३,८; या २,१; दंवि २, ३†; -न्दुना कौसू १३, ११; -न्दुम् माश्रौ ३,६, १२; -न्दून् बौश्रौ ८,२० : १८.

बिन्दु-मत्- -मत् काश्रौ २५,२,१०.

बिन्दु-सिक्त- -क्तम् या १४,३०[u].

२बिन्दु (बप्रा.)- पाग २,४, ६७;४,१, १०४[a];५,३,११६[v]; -न्दवे कागृ ४,२०†[w]; -न्दुः ऋअ २,८,९४; ९,३०; साअ १,१४९; १७४.

बैन्दव- पा २, ४,६७; ४, १, १०४.

२बिन्दवीय- पा ५, ३,११६.

बिन्दुक[x]- -के विध ८५,१२[y].

बिन्दुसरस्[x]- > °रः-प्रमुख[z]- -खानि शंध ११६ : ११?[a1].

a) व्यप.। b) सकृत् स्थूलबाहु- इति पाका.। c) वहु. <बाहवि-। d) =अन्तरिक्ष-। MW. निष्क- इति। e) पाउ. विध. पाठः। f) =मार्जार-। व्यु.? <√विड् (आक्रोशे) इति प्रायिकम्। g) मज्ज- =जलजन्तु-?। h) बौश्रौप्र. निसू. पाठः। i) व्यप.। व्यु.? < √बिद्, न्द् इति MW.। j) बिदापुट- इति पाका. BPG. PW. प्रमृ.। k) वहु. <बैद-। l) निसू. वैताश्रौ. पाठः। m) =अहीन-विशेष-। n) पूप. =बैद-त्रिरात्र-। o) बौश्रौप्र. पाठः। p) =वंश-खण्ड-। व्यु.? <√बिद्, न्द्, इति वाच. PW. MW.। q) विकारार्थे प्र.। r) =इषु-। s) पृ ६९८ g द्र.। t) वैप १ द्र.। u) तु. राज., शिवसं.। °न्दुः सि° इति ल.?। v) =आयुधजीविसंघविशेष-। w) =देवता-विशेष-। x) =तीर्थ-विशेष-। y) बिल्वके इति जीसं.। z) बस.। a1) "सराप्र° इति पाठः? यनि. शोधः (तु. वीरमित्रोदयः [२,३५६])।

विभीत[,द[a]]क[b]- पाउभो २,२,३९; पाग ४, ३, १५४; –कः वाधूश्रौ ४,५९[२] : १.

बैभीत [,द] क- पा ४,३,१५४; –कः आश्रौ ९,७,७; शांश्रौ १४, २२,१५.

बिभीदक-तिल्वक-बाधक-नीव-निम्ब-राजवृक्ष-शाल्मल्य (लि-अ) रलु-दधित्थ-कोविदार-श्लेष्मात-क-वर्जम् गोगृ १,५,१६.

विभेदादि- √भिद् द्र.

बिभ्यत्- √भी द्र.

बिभ्यस्यत्- √भ्यस् द्र.

बिभ्युषी- √भी द्र.

बिभ्रत्- √भृ द्र.

१बिम्ब[c]- पाउ ४, ९५[d]; पाग २, ४, ३१; ४, १, ४१; –म्बस्य[e] वैगृ ४,११ : १३; १६.

बिम्बी[f,g]- पा ४,१,४१.

बिम्ब-क[h]- -काः अप ५२,२, ३.

२बिम्ब[i]- > बैम्बकि- पावा ४, १, ९७; –कयः बौश्रौप्र ४१ : ३.

√बिल् पाधा. तुदा. पर. भेदने; चुरा. पर. क्षेपे.

१बिल[j]- -लम् शांश्रौ १२, १७, १‡; काश्रौ १६,४,३; आपश्रौ २,४,४; ६,१[२]‡; ७,३××; बौश्रौ; –लयोः वैश्रौ १८, १८ : १३; –लात् आपश्रौ १६, ४, ११; अप २३, ३,२; –लानि बौश्रौ २४, २७ : १५; १६; –ले शांश्रौ ५, ९,८; आपश्रौ ७,१२, १४; १२, १६, ११; २९, ९; १३, १०, १०; वैश्रौ; –लेन बौश्रौ ९, १ : ९; १०, १ : ८; २५, २९ : १; वैश्रौ १३,४ : १.

बिल-बाह्य- -ह्यम् अप २३,३,३.

बिल-वत्- -वन्ति आग्निगृ १,१,१ : २८; भागृ १,३ : ४; हिगृ १,१, २४.

बिल-वासिन्- -सिनाम् अप ६५, २,७.

बिल-शब्द- -ब्दे दंवि १, ५.

बिला( ल-अ )र्ध- -र्धे अप २३, २,४.

बिलार्ध-तस् (:) अप २३,३,३.

बिला( ल-अ )वका( श > )शा[j]- -शाम् भाश्रौ १०, ५, १२?[k]; हिश्रौ ७,१,४३.

बिले-शय- -यः विध ४४,१३.

२बिल-(>बिल-स-,बैलायन-) पाग ४,२,८०[२].

विलिश[l]- -शम् सु १७, २.

बिल्म[j]- पाउभो २,२,२४३; –ल्मम् या १,२०∮.

बिल्म-ग्रहण- -णाय या १,२०.

१बिल्व[m]- पाउ ४,९५; पाग ४, २, ८०[n]; ९१; ३,१३६; ६,४,१५३; –ल्वः शांश्रौ १२, २४, २‡; वाधूश्रौ ४,६४[५] : ८; वैश्रौ १०, १ : ११; अप २३,६,५; –ल्वम् अप ३३, ५, ८; या १, १४; –ल्वे विध ९९, १२; –ल्वैः अप ३१, ६,४; शंध ४४८.

१बैल्व- पाग ४, ३, १३६; पाग ४,२, ८०[m]; –ल्वः शांश्रौ १५,१,१६; आपश्रौ १८, १, ८; वाधूश्रौ ४, ६४[५] : ८; वैश्रौ; –ल्वम् आपश्रौ ७,१,१६; १२, १,१२; बौश्रौ ७, ६:४६; भाश्रौ; –ल्वाः शांश्रौ १६,३,२; १२,३; आपश्रौ; –ल्वान् बौश्रौ १५, १४ : ३; २३ : १; वाश्रौ ३,४, १, ५५; हिश्रौ १४, २, ४०; –ल्वानाम् वाधूश्रौ ३, ८१ : ५; –ल्वानि बौश्रौ १५, १४ : १; वाधूश्रौ ३,७६ : ७; –ल्वे हिश्रौ १४, ५, ११; –ल्वेन काश्रौ ९, ६,११.

बैल्व-खादिर-पालाश- -शाः काश्रौ २०, ४,१९.

बैल्व-पालाश- -शौ गौध १, २४.

बैल्व-पालाश-खादिरा(र-आ)श्वत्थ-पैलत्रौ(व-औ)दुम्बर- -राः शंध ३६?[o].

१बैल्वक- पा ४,२,८०.

बिल्वकीय- पा ४,२,९१.

२बैल्वक- पा ६,४,१५३.

बिल्व-गुल्म-लता- -ताः आज्यो २, १०.

बिल्व-गौरसर्षप- -पाः अप ३३,१, ७.

बिल्व-तण्डुल- -लैः बौध १, ५, ३२.

बिल्व-तस् (:) अप ३६,२,४.

बिल्व-पद्मो(द्म-उ)त्पल- -लानाम् अप ७०,४,८.

बिल्व-पलाश- -शयोः अप ३६,२, ४.

बिल्व-पलाश-खदिर-रोहीतको( क-उ)दुम्बर- -राणाम् वाश्रौ १,२,

---

a) शांश्रौ. गोगृ. पाठः। b) =वृक्ष-विशेष- (नभा. वहेड़ा)। c) वप्रा. । व्यु.?। d) <√वी। e) =प्रतिमा-। f) वैप १ द्र.। g) =वनस्पति-विशेष- इति पागम.। h) स्वार्थे प्र.। i) व्यप.। j) वस.। k) °शम् इति पाठः? यनि. शोधः (तु. हिश्रौ.)। l) =विडिश-। व्यु.? < बलिन्- + √शो इति अभा.। m) वैप १,२२७८ k द्र.। n) बैल्व- इति पाका.। o) बि° इति पाठः? यनि. शोधः।

